August 1922.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS,

NO. 296.

# साङ्ख्यकारिका

ईश्वरकृष्णविरचिता ।

माठराचार्यविरचित–माठरवृत्तिसहिता ।

साहित्योपाध्याय पं० विष्णुप्रसाद शर्मणा

संशोधिता ।

## SÂNKHYA KARIKA

BY

ISWARA KRISHNA

*With a commentary of Mathara Charya.*

*Edited by Sahitya Charya. P. Vishnu Prasad Sarma.*

FASCICULUS I–१

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES

AGENTS.-OTTO HARRASSOWITZ, LEIPZIG.

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY

PROBSTHAIN & CO; BOOKSELLERS LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1922.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२९३

# भूमिका ।

—:०:—

साङ्ख्यदर्शनमधिकृत्य सतोरपि तत्त्वसमास-साङ्ख्यप्रवचन-सूत्रग्रन्थयोरस्य साङ्ख्यसप्ततिग्रन्थस्य प्राचीनत्वाद्विशदत्वाच्च महती प्रतिष्ठा । श्रीशङ्कराचार्यैः प्राचीनबौद्धजैनग्रन्थकारैश्च तत्र तत्र साङ्ख्यमतनिरूपणे तत्खण्डने वा साङ्ख्यसप्ततेरेवार्या उदाहृताः, न तु सूत्रग्रन्थयोः कानिचिदपि सूत्राणीति सूत्रग्रन्थयोः प्राचीनतरत्वे संशयः । सतीष्वपि बह्वीषु टीकासु साङ्ख्यसप्ततिग्रन्थस्य, अत्र प्रथमवारं मुद्रणतां नीता माठरवृत्तिः प्राचीनतरा सरलतरा चेति साङ्ख्यसिद्धान्तजिज्ञासूनामतीवोपकारिणी । तत्र कदाऽस्याः प्रादुर्भावो जात इति विचार्यमाणे मूलभूतायाः साङ्ख्यसप्ततेर्विरचनसमयस्यादौ निर्णय आवश्यकः ।

## ईश्वरकृष्णः ।

साङ्ख्यसप्ततेः कर्ता ईश्वरकृष्णो नाम साङ्ख्याचार्यः, 'भगवान्' भगवतोक्तम्' इत्यादिबहुमानसूचकैः पदैर्माठरवृत्तौ लक्षितः । चीनभाषायां परमार्थनाम्ना बौद्धपण्डितेन स्वगुरोर्वसुबन्धोश्चरितं निबद्धम् । तस्माज्ज्ञायते यद्वसुबन्धोर्गुरुर्बुद्धमित्रो मनृबुद्धो वा साङ्ख्याचार्येण वार्षगण्यशिष्येण विन्ध्यवासिना वादे पराजितः, येन हिरण्यसप्ततिः सुवर्णसप्ततिरिति वा ग्रन्थो रचितः । एतस्मात्केचन पण्डिता विन्ध्यवास्येव ईश्वरकृष्ण इत्यनुमिमते । एतदशुद्धमित्यग्रे प्रतिपादयिष्यते । इदमपि वसुबन्धुनोक्तं यद्विन्ध्यवासिप्रणीतस्य ग्रन्थस्य खण्डनं वसुबन्धुना परमार्थसप्ततिरित्याख्यया कृत्याऽऽविष्कृतमिति ।

केषांचिदपरेषां चीनदेशीयपण्डितानामैतिह्ये त्वीश्वरकृष्णस्य वसुबन्धुशिष्येण दिङ्नागाचार्येण सह विवादः सञ्जातः, तस्मिन्नीश्वरकृष्णः पराजितोऽपि समयानुबन्धमविगणय्य बौद्धधर्मं न स्वीचकार, तेन दिङ्नागो विषण्णो लोकोपदेशाद्विरराम, पश्चाच्चार्यमञ्जुश्रीप्रेरणया प्रमाणसमुच्चयाख्यं ग्रन्थं रचयामासेति ।

बहूनां पण्डितानां मतानुरोधेन वसुबन्धोस्तु समयः (वि०

सं० ४७६–५५६, ई. सं० ४२०–५००) वर्तते। दिङ्नागसमयः–(वि० सं० ५३६–५७६, ई० सं० ४८०–५२०, परमार्थसमयस्तु (वि० सं०) ५५५–६२५, ई० सं० ४९९–५६९, वर्षसम्मितः। यद्यपि वसुबन्धोः कालः कैश्चित् एतस्मादपि शतवर्षपूर्वमनुमीयते, तथापि वामनीयकाव्यालङ्कारसूत्रवृत्तौ समुद्धृतस्य "सोऽयं सम्प्रति चन्द्रगुप्ततनयः" इत्यादिश्लोकार्धस्य वृत्तौ "आश्रयः कृतधियामित्यस्य वसुबन्धुसाचिव्योपक्षेपपरत्वात् साभिप्रायत्वम्" इति दर्शनेन वसुबन्धुर्गुप्तवंशीयमहाराजाद्वितीयचन्द्रगुप्तकुमारस्य महाराजकुमारगुप्तस्य समये (वि० सं० ४७१–५११, ई० सं० ४१५–४५५) आसीदिति ज्ञायते। अत ईश्वरकृष्णो भवतु वसुबन्धोस्तच्छिष्यस्य दिङ्नागस्य वा समकालीनः, तथापि (वि० सं० ५११ ई० सं० ४५५) परिसरे वर्तमानोऽभूदिति प्रतीयते।

प्रयुक्तपदमञ्जर्याख्यस्य कोशस्य कर्ता ईश्वरकृष्णकालिदासः अयमन्यो वा इति न ज्ञायते।

## एतत्पूर्वीयाः साङ्ख्याचार्याः।

ईश्वरकृष्णेन पूर्वेषां साङ्ख्याचार्याणां मतं सङ्क्षिप्येयं सप्ततिर्विरचितेति ७१। ७२। आर्याभ्यां स्फुटम्।

तत्र परमर्षिः कपिलः साङ्ख्यदर्शनस्याद्यद्रष्टेति सर्वसम्मतम्। तेनैव तत्त्वसमासाख्यसाङ्ख्यसूत्राणि प्रणीतानीति प्राचां मतम्। नवीनास्तु तथा न मन्यन्ते।

आसुरिनामा तच्छिष्यः। अस्य—

"विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते।
प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि॥"

इति श्लोकस्य गुणरत्नसूरिकृतायां षड्दर्शनसमुच्चयटीकायां (३। ४४) समुद्धरणेन ज्ञायते यदनेन कोऽपि कारिकाबद्धः प्रबन्धो निर्मितः।

अस्य शिष्यः पञ्चशिखो नाम। स च विज्ञानभिक्षुमतेन (ब्रह्मसूत्रऋजुव्याख्यायां) तत्त्वसमासाख्यभाष्यस्य कर्ता। तथाहि तच्छिष्यः भावागणेशः—

'समाससूत्राण्यालम्ब्य व्याख्यां पञ्चशिखस्य च।'

इति तत्त्वयाथार्थ्यदीपनेऽभिहितवान्। तथा तत्र (पृ०–८१) तेनैव

एकः श्लोकः "उक्तं च पञ्चशिखाचार्यैः" इत्यवतरणपूर्वं समुद्धृतः।

योगसूत्रव्यासभाष्ये ( १ । ४ ) "तथा च सूत्रम्-एकमेव दर्शनं ख्यातिरेव दर्शनम् इति" इत्यस्य टीकायाम् "इदं पञ्चशिखाचार्यस्य सूत्रम्" इति वाचस्पतिमिश्रः । तथा तस्मिन्नेव भाष्ये ( २ । १३) "स्यात्स्वल्पः सङ्करः सपरिहारः" इत्यादिकमवतारितम् । तदपि पञ्चशिखवचनमिति वाचस्पतिः । इदं च पञ्चशिखसूत्रमिति साङ्ख्यतत्त्वकौमुदीटीकायां स्वप्नेश्वरः । तथा तत्रैव ( ३ । १३ ) "रूपातिशया वृत्त्यतिशयाश्च विरुध्यन्ते" इति. तदपि पञ्चशिखाचार्यसम्मतिरित्याह वाचस्पतिः । अतः पञ्चशिखाचार्येणापरः कोऽपि साङ्ख्ययोगसूत्रात्मको ग्रन्थो व्यरचि इत्यनुमीयते ।

वार्षगण्योऽपि कश्चन प्राचीनः साङ्ख्ययोगाचार्यः । एतस्य एकं वचनं व्यासभाष्ये ( ३ । ५३ ) उपलभ्यते ।

एतदुत्तरं कस्मिंश्चित्काले जातो विन्ध्यवासिनामकः प्रसिद्ध आचार्यः । अयमेवेश्वरकृष्ण इति केषांचिन्नवीनानां मतम् । अपरेषां तु नव्यानां वार्षगण्यो विन्ध्यवासी चोभौ ईश्वरकृष्णात् परस्ताज्जातौ इति मतम् । तदिदं मतद्वयमपि दुष्टं भाति । तथाहि-"अथ व्याडिर्विन्ध्यस्थो नन्दिनीसुतः । मेधावी च" (२ । ७ । २४-२५) इति त्रिकाण्डशेषात् , "अथ व्याडिर्विन्ध्यवासी नन्दिनीतनयश्च सः ।" ( ३ । ५ । ६ ) इति हैमकोशात्, "अव्याधो विन्ध्यवासी च मरुद्नन्दन इत्यपि ।" ( १० ) इति संयमिनाममालायाश्च स्फुटमवगम्यते यद् व्याडिरेव विन्ध्यवासीति । स च भगवतो वर्षस्य शिष्यो नन्दसमकालीनः ( कथासरित्सागरे १ । २ । ). पाणिनिसूत्राणां सङ्ग्रहाख्यटीकायाः कस्यचित् कोशस्य च कर्ता, दाक्षायणः पतञ्जलेरपि पुरोगामी, साङ्ख्ययोगाचार्यश्च । देवभद्रकृतन्यायावतारटिप्पणे गुणरत्नसूरिकृतषड्दर्शनसमुच्चयटीकायां ( ३ । ४१ ) च "विन्ध्यवासी त्वेवमाचष्टे-

"पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम् ।
मनः करोति सान्निध्यादुपाधिः स्फटिकं यथा ॥" इति ।

वादमहार्णवे च-"बुद्धिदर्पणसङ्क्रान्त०" इत्यादिकस्य तत्कृतश्लोकस्य दर्शनादयमार्याग्रन्थकर्तुरीश्वरकृष्णाद्भिन्न एव । हरिभद्रसूर्यादिभिः प्राचीनैरपि द्वयोरुल्लेखो भिन्न एव कृतः ।

यत्तु केश्चित् ७१ आर्यावृत्तौ भार्गवादिप्राचीनसाङ्ख्याचार्याणां नामनिर्देशो वार्षगण्यविन्ध्यवासिनोर्नामादर्शनेन तयोरीश्वरकृष्णादर्वाचीनत्वं मतम्, तदरमणीयम् । वृत्तिस्थप्रभृतिशब्देन पराहतत्वात्, चीनैतिह्यात् तयोरीश्वरकृष्णात् पूर्ववृत्तित्वस्यावगमात्, प्राचीनतरे व्यासभाष्ये ( वि० सं० ३५० ई० सं० ३०० ) वार्षगण्यग्रन्थस्योदाहृतत्वात्, विन्ध्यवासिनश्च व्याडेरेव नामान्तरत्वात् ।

अपि च भोजराजेन पातञ्जलयोगसूत्रवृत्तौ ( ४ । २२ ) एकमेव विन्ध्यवासिवचनम्-"सत्त्वतप्यत्वमेव पुरुषतप्यत्वम्" इत्युपन्यस्तम् । तत्तु गद्यात्मकं सत् तस्य कस्याप्यपरस्य टीकाग्रन्थस्य गद्यग्रन्थस्य वा कर्तृत्वं द्योतयति । भोजवृत्तौ तत्रैव "प्रतिबिम्बे प्रतिबिम्बमान०" इत्याद्यपरं वाक्यं विन्ध्यवासिन उक्तिरिति सम्भ्रान्तम्, तद्वाक्यस्य 'अन्यत्रापि' इति पूर्वकत्वात् । अयं योगसूत्रवृत्तिकारो भोजराजः प्रसिद्धात् मालवपतेः सरस्वतीकण्ठाभरणादिप्रणेतुर्भोजराजात् (वि० सं० १०६६ ई० १०१० ) अन्य एव तस्मात् सार्धशतवर्षपूर्ववर्ती । तथाहि कश्मीरभूभर्तुः शङ्करवर्मणः ( वि० सं० ९३९-९५८, ई० सं० ८८३-९०२ ) काले जयन्तभट्टः स्वकृतौ न्यायमञ्जर्यां प्रत्यक्षलक्षणानां दूषणावसरे ईश्वरकृष्णोक्तं "प्रतिविषयाध्यवसायो दृष्टं ( सां० स० ५ ) इति लक्षणं दूषयन् "यत्तु राजा व्याख्यातवान् 'प्रतिराभिमुख्येन वर्तते तेनाभिमुख्येन विषयाध्यवसायः प्रत्यक्षम्, इति" इत्यादिकं लिखितवान् । सोऽयं राजा साङ्ख्यसप्तति टीकाकृत्, कस्यचित् व्याकरणग्रन्थस्यस्य, पातञ्जलसूत्रस्योपरि राजमार्तण्डाख्यवृत्तेः, वैद्यके च राजमृगाङ्काख्यस्य ग्रन्थस्य कर्ता (योगसूत्रवृत्तौ श्लो० ५) । अयमेव राजवार्तिकस्यापि कर्ता स्यात् । अस्य रणरङ्गमल्ल इति नाम विरुदं वा इत्यपि तत एव ज्ञायते । एतत् किमपि मालवपतेर्भोजराजस्य नोपलभ्यते । अत इमौ द्वौ भिन्नौ एव इति सुव्यक्तम् । तत्र रणरङ्गमल्लः भोजानां विदर्भाणां राजा इति भोजराज इति ख्यातिमगात् इति सम्भाव्यते । यथा रामायणचम्पूकाव्यस्य कर्ता विदर्भराजः भोजराज इति ।

## षष्टितन्त्रम् ।

सत्यपि पञ्चशिखादिप्रणीतप्राचीनग्रन्थकदम्बे साङ्ख्यसप्ततिस्तु षष्टितन्त्राख्यं ग्रन्थमनुसृत्येश्वरकृष्णेन प्रणीतेति ७२ । ७३ आ-

र्याभ्यामवगम्यते । "गुणानां परमं रूपं" इत्यादिका एका कारिका व्यासभाष्ये ( ४ । १३ ) समुद्धृता, सा षष्टितन्त्रस्था इति तट्टीकायां वाचस्पतिमिश्रः । माठरवृत्तौ ( गौडपादीये च ) १७ आर्याव्याख्याने तत एव कश्चिद्गद्यभागोऽपि समुद्धृतः । अतस्तत् विष्णुपुराणादिवद्गद्यपद्यात्मकं स्यादिति भाति । चीनदेशीयपण्डितानां मते पञ्चशिख एवास्य कर्ता । परन्तु बहुभिरनत्सन्दिह्यते । अस्य नाम्नस्तन्त्रान्तत्वं तस्यातिप्राचीनत्वं बोधयति । अस्य नामाद्युल्लेखोऽपि पाञ्चरात्राणामहिर्बुध्न्यसंहितायां जैनानामनुयोगद्वारसूत्रे च वर्तते ।

## माठरः ।

माठर इति न व्यक्तिविशेषस्याभिधानम्, अपि तु ग्रन्थकर्तुः गोत्रं नाम कश्यपगोत्रभेदे मठरगोत्रीयत्वात् माठर इति । यथा न्यायसूत्रभाष्यं पक्षिलस्वामिना कृतं वात्स्यायनेन कृतमिति, विष्णुगुप्तकृतमर्थशास्त्रं कौटिल्यकृतमिति, उद्योतकराख्यविरचितं न्यायवार्तिकं भारद्वाजीयं भारद्वाजकृतमिति वेति तत्तत्कर्तुर्गोत्रनाम्नैव प्रथितान्यभूवन्, तथैवेयं वृत्तिरपि माठराचार्यकृतेति कर्तुर्गोत्रनाम्ना प्रसिद्धिमुपगता । इयं वृत्तिर्मूलग्रन्थेन सह चीनभाषायां परमार्थपण्डितेन ( वि० सं० ६ १३-६२५, ई० सं० ५५७-५६९ ) मध्ये परावर्तितेत्युभयभाषाविद्भिः समर्थ्यते । ( तिलकाख्यपण्डितस्तु तथा न मनुते ( संस्कृतरिसर्च पु० १ पृ० १०८ ) । तत इयं वृत्तिः वि० सं० ४५० वर्षादर्वाचीना नेति केषांचिद्विदुषां मतम् । चीनभाषापरावर्तने वृत्तिकारस्य नाम न निर्दिष्टमिति शान्त्यम् ।

अत्रेदमप्यन्यद्विचारणीयम्,यत् २९ आर्यावृत्तौ "यथा दर्पणाभाव आभासहानौ"[१] इत्युदाहरणं हस्तामलक ( संवाद ) स्तोत्रात्समुद्धृतं दृश्यते । तच्च स्तोत्रं श्रीशङ्कराचार्यसमकालीनम् ( वि० स० ८३६-८६८ ई० सं० ७८०-८१२ ) इति प्रसिद्धमेव । ततः अयम्, "अहङ्कारो विर्य ब्रूते" इत्यादयः केचनापरे चांशा अद्वैतमतानुकूला अत्र प्रक्षिप्ता इति माठरवृत्त्या अतिप्राचीनत्वाभिमानिभिर्वक्तव्यम् । अन्यथा एतस्याः शङ्कराचार्यसमयात् परस्ताद्विरचनं स्वीकार्यम् ।

यत्तु साङ्ख्यसप्तत्या गौडपादीय भाष्यम् (बनारस-संस्कृतसी-

---

( १ ) उपरिष्टादुक्तः 'यथादर्पणाभाव' इत्यंशः ।

रिजाख्यग्रन्थमालायां मुद्रितम्) तत्तु माठरवृत्त्याः केनचित्कृतः सङ्क्षेप इति भाति। नहि परकृतेः सङ्क्षेपकर्तृत्वं श्रीशङ्कराचार्यपरमगुरुषु गौडपादेषु सम्भवति। अस्य च उत्तरगीताव्याख्यायाश्च प्रणेता कश्चिदपरो गौडपादः सम्भाव्यते।

मलधारि-राजशेखरसूरिणा (वि० सं० १३५०, ई० सं० १२९४) स्वकृतषड्दर्शनसमुच्चये माठरो गौडपादश्च साङ्ख्यग्रन्थकर्तारौ पृथगुक्तौ। तदनुसारी गुणरत्नसूरिरपि हरिभद्रीयषड्दर्शनसमुच्चयटीकायाम् (३।४३)–"साङ्ख्यानां तर्कग्रन्थाः षष्टितन्त्रोद्धाररूपं साङ्ख्यसप्ततिनामकं, माठरभाष्यं, ..गौडपादं च" इत्युक्त्वा द्वयोः पृथक्त्वं सूचयति। अतो गौडपादीयं माठरवृत्त्या एव सङ्क्षेप इति भाति।

## मूलकारिकासङ्ख्याविवेकः।

माठरवृत्तौ व्याख्यातानां कारिकाणां सङ्ख्या ७३ परिमिता वर्तते। वाचस्पतिमिश्रकृतटीकायां नारायणतीर्थकृतटीकायां च अत्रस्था अन्तिमा आर्या नोपलभ्यते अतस्तयोरार्यासङ्ख्या ७२ मिता। गौडपादीयं तु ६९ आर्या यावद्वर्तते। चीनभाषापरावर्तने तु ६३ तमी आर्या प्रभ्रष्टेति तत् ७१ आर्यासम्मितम्।

प्रकृते "सप्तत्यां किल येऽर्थाः।" (७२) इत्युक्तत्वात् आर्यासङ्ख्यायां चोक्तप्रकारेण न्यूनाधिक्यदर्शनेन तत्र पण्डितानां विवादः। तत्र केचन ६९ आर्याया ऊर्ध्वं स्थितमार्याचतुष्टयं प्रक्षिप्तं मन्यन्ते। मध्ये च कुत्रचिदेकाऽऽर्या प्रभ्रष्टेति च सप्ततिसङ्ख्यापूरणाय तर्कयन्ति। तत्र वस्तुतस्तु अन्तिममार्याचतुष्टयं न प्रक्षिप्तम्। तथाहि शेषप्रणीतपरमार्थसारापरनाम्नि आर्यापञ्चाशीतिरित्याख्ये प्रबन्धे ८७ आर्या वर्तन्ते। तथापि तत्र अवतरणरूपामाद्यामार्यां ग्रन्थकर्तृनामादिप्रकाशिकां चरमामार्यां विहाय वेदान्तसिद्धान्तस्तु तन्मध्यस्थे पञ्चाशीतिसङ्ख्याके आर्यासमूहे प्रतिपादित इति आर्यापञ्चाशीतिरित्याख्ययैव तस्य व्यवहारः। तथा अभिनवगुप्ताचार्यप्रणीते परमार्थसारे १०५ आर्या वर्तन्ते। तथापि आरम्भे आर्यात्रयमवतरणरूपमन्ते चार्याद्वयमुपसंहारात्मकम्, सिद्धान्तस्तु तन्मध्यस्थेन आर्याशतकेन निबद्ध इति तेनैव तत्र प्रकाशितम्। "आर्याशतेन तदिदं सङ्क्षिप्तसारमतिगूढम्। अभिनवगुप्तेन मया" (१०५) इत्यादि। एवमन्यत्रापि बहुषु शतकान्तनामसु लघुकाव्येषु वृत्तसङ्ख्यायाः शतकाधिक्यदर्श-

न्येऽपि तेषां शतकमित्यनेनैव पदेन व्यवहारः। तत्र तत्र च प्रतिपाद्यं निर्दिष्टसङ्ख्याकैः पद्यैरेव प्रतिपादितम्। तथैव साङ्ख्यसप्ततिरिति अस्य संज्ञायामपि बोध्यम्। अतो नान्तिममार्याचतुष्टयं प्रक्षिप्तम्।

एवं प्रकृतेऽपि साङ्ख्यसप्ततिरिति ग्रन्थनाम्नाऽत्र सिद्धान्तप्रतिपादिकानामार्याणां सप्ततिरपेक्षिता। परन्तु स सर्वपुस्तकेषु ६९ आर्याभिरेवोक्तो लभ्यते। अतः तिलकोपाह्वो गङ्गाधरसूनुर्बालपण्डितः ६१ कारिकाया माठरवृत्तिं सूक्ष्मेक्षिकया विचार्य तद्गतः "तत्र सुकुमारत्वं वर्णयति" (पृ० ७५ पं० ९) इत्यारभ्य "सुकुमारतरम् इत्येतत्तु वाक्यशेषः कृतः।" पृ० ७६ प० १२-१३) इत्यन्तो वृत्तिभागोऽपरार्याविशेषस्य व्याख्यानमित्यवधार्य तस्मात्—

"कारणमीश्वरमेके पुरुषं कालं परे स्वभावं वा।
प्रजाः कथं निर्गुणतो, व्यक्तः कालः स्वभावश्च।"

इत्यार्यां सङ्कलितवान्, तां च ६२ संख्यया अङ्कयित्वा, सप्ततिसङ्ख्यापूरणं कृतवान्। इयमेतदर्थिका वा एका आर्या लेखकादिप्रमादेन मूलाद्भ्रष्टा इति तस्य मतम्।

इदमप्यत्र विचारणीयम् यद्वराहमिहिरकृतबृहत्संहिताया विवृतौ (अ० १। ७) भट्टोत्पलकृतायां (वि० सं० १०२२, ई० सं० ९६६) २७ आर्यायाः

"सङ्कल्पकमत्र मनस्तच्चेन्द्रियमुभयथा समाख्यातम्।
अन्तस्त्रिकालविषयं तस्मादुभयप्रचारं तत्।"

इति पाठो दृश्यते। अत्रोत्तरार्धस्य पाठः प्रचलितपाठाद्भिन्नः। तत इदमपि सन्देग्धुं शक्यं यन्मुद्रितोत्तरार्धमधिकृत्य तस्य पूर्वार्धं भ्रष्टम्। तेन सह "गुणपरिणामविशेषात्" इत्याद्युत्तरार्धात्मिका आर्या २८ संख्याङ्किता स्यादिति। एवं अधिकार्याविषयको निर्णयो विशेषान्वेषणाधीनः।

## उपसंहारः।

श्रीमहाभारते शान्तिपर्वणि मोक्षधर्मेषु कपिलासुरिपञ्चशिखानां मतानि लभ्यन्ते। तत्र तेषामभिप्रायाः साङ्ख्यसप्ततिप्रक्रियाया बहुष्वंशेषु भिन्ना अपूर्णाश्च। उपनिषद्वाक्यविशेषानुपजीव्य साङ्ख्ययोगदर्शनयोः पुरातनकाले प्रवृत्तिर्जाता। तत्र केवलं तत्त्वविवेचन-

मवलम्ब्य साङ्ख्यदर्शनं निरीश्वरवादे परिणतं, क्रियाविशेषात्मकं योगदर्शनं च सेश्वरवादे परिणतम् । साङ्ख्यदर्शनं योगदर्शनस्य शेष्यपि द्वे पुरा भिन्ने एव मते । प्रकृतिपुरुषयोः पृथक्करणं द्वयोरेव लक्ष्यमासीत् । ततः पुराकाले भगवद्गीतादिषु अर्वाचीने च विज्ञान-भिक्ष्वादिभिस्तयोः समन्वये प्रयतितम् । तत्र साङ्ख्यं विचारप्रधानं, योगं च क्रियाप्राधान्यम्, द्वयोरङ्गाङ्गिभावश्च सम्बन्धः प्रतीयते । साङ्ख्यमतविकासादिचर्चाया विस्तरभियाऽत्रैव विरम्यते । इति ।

अस्यां वृत्तौ "यथा पङ्केन पङ्काम्भः" इत्युदाहृतः श्लोकः (पृ०८), श्रीमद्भागवते (१।८।५२) वर्तते, तथैव "एष आतुरचित्तानां" (पृ०६९) इत्यपि तत्रैव (श्रीमद्भागवते १।६।३५) किञ्चित्पाठभेदेन दृश्यते । अतोऽनुमीयते यत् श्रीमद्भागवतं माठरवृत्तिसमयात्पुरातनम् ॥ इति ।

विदुषामनुचरः—

त्रिपाठ्युपाह्वः श्रीमनःसुखरामात्मजः तनुसुखरामशर्मा ।

सेयं वृत्तिः तत्त्वकौमुद्याद्यपेक्ष्य अन्ययैव सरण्या सरलतया वैशद्येन च कारिकार्थं साङ्ख्यीयविषयजातं च तथा प्रतिपादयति यथा साधारणजना अप्यनायासेन साङ्ख्यरहस्यान्यवबोद्धुं शक्नुवन्ति इत्यपूर्वाया अमुद्रितचराया अप्यस्या एकमेव पुस्तकं नातिशुद्धप्रायमुपरिस्थभूमिकाकर्तृमहाशयसकाशाल्लब्ध्वा श्रीविष्णुप्रसादविदुषा संशोधय्य मुद्रणतां नीता ।

तदत्र सपरिश्रमं कृतशोधनेऽपि मानुष्यकनान्तरीयकानवधानजनितान् दोषान् मर्षयित्वा तितिक्षावद्भिर्गुणैकपक्षपातिभिः स्वकीया अपूर्वसाङ्ख्यग्रन्थदिदृक्षा सफलं विधास्यत इति—

विद्वद्विधेयः—

जयकृष्णदासगुप्तः

चौखम्भा-संस्कृतसिरीज़

बनारस ।

## माठरवृत्तौ प्रमाणत्वेन समुद्धृतानां वाक्यादीनां

# वर्णानुक्रमणी[1] ।



---

(१) अत्र श्रुतिवाक्यानि न सङ्गृहीतानि । (२) शावरभाष्ये (१।२।४)

(३) महाभारते (३।३० ३८)

(४) अयं श्लोकं "तथा चोक्तं पञ्चशिखेन प्रमाणवाक्यं" इत्युल्लेखपूर्वमुद्धृतस्तत्त्वयाथार्थ्यदीपने हरिभद्रसूरिणा (वि० स० ७८९, ई० सं० ७२९) च शास्त्रवार्तासमुच्चये ।

( १ ) हस्तामलकस्तोत्रे ।

( २ ) 'यस्य कस्य तरोर्मूलं' इत्यादिः पाठ प्रसिद्ध ।

( ३ ) 'आगम' अयमिति द्वादशकारिकाटीकाया वाचस्पतिमिश्र (वि०सं० १०३२ ई०सं० ९७६

( ४ ) 'वैद्यराज नमस्तुभ्यं' इति पाठः प्रसिद्धः ।

( ५ ) यजुर्वेदसंहिताया २४ अध्यायेऽन्तिममन्त्रस्य महीधरभाष्ये अस्योत्तरार्धे 'अश्वमेधस्य यज्ञस्य नवमिश्चाधिकानि च' इति पाठभेद उपलभ्यते ।

( ६ ) अयं गुणरत्नसूरिणा षड्दर्शनसमुच्चयटीकाया ( ३।२३ ) "तदुक्तं माठरप्रान्ते (भाष्ये ?) 'हस पिब लल खाद मोद नित्यं, भुङ्क्ष्व च भोगान्यथाभिकामम् । यदि विदितं ते कापिलमतं तत्प्राप्स्यसि मोक्षमचिरेण ।" इति पाठभेदेन समुद्धृतम् ।

# शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | ६ | कुद्ध | क्रुद्ध |
| ७ | ८ | वेदान्तवादिनां | वेदवादिनां |
| ८ | १६ | परिमाणवदव | परिमाणवदेव |
| ११ | ३ | विषया, | विषयाः, |
| १३ | १५ | ०लक्षणा गुण | ०लक्षणागुण |
| १३ | १६ | लाक्षणात्रैविध्यम् | लक्षणात्रैविध्यम् |
| २४ | ४ | योज्य । | योज्ये । |
| २४ | ८ | परस्परावरुद्धा· | परस्परविरुद्धा· |
| ३१ | ३ | होश्वित् | होस्वित् |
| ३२ | १३ | श्विदकर्तेति । | स्विदकर्तेति । |
| ३४ | ९ | स्तै सह | स्तैः सह |
| ३५ | ३ | तावहर्शनार्थं | तावद्दर्शनार्थं |
| ४१ | ३ | साकित्स्वरूपाणि | सात्त्विकरूपाणि |
| ४१ | ९ | एवं विधाया | एवंविधाया |
| ४१ | ५ | वदति कर्म | .......(?) |
| ४३ | १३ | आहोश्वित् | आहोस्वित् |
| ४४ | ७ | अथै | अथै- |
| ४४ | २२ | स्वभावेनेति । | स्वभावेन वेति |
| ४५ | १४ | ध्यवमाय | ध्यवसाय |
| ४७ | ६ | गन्धं- | गन्धं |
| ४८ | ७ | नामाभिपायः। | नामाभिप्रायः । |
| ४८ | २२ | पकाशकरम् । | प्रकाशकरम् । |
| ४९ | १० | प्रकाशतं | प्रकाशितं |
| ५३ | ९ | सुप्त | सुतं |
| ५५ | ९ | माधर्य | माधुर्य- |
| ५७ | ३ | सूक्ष्मशरारिम | सूक्ष्मशरीरम |
| ५७ | १३ | सूक्ष्म | सूक्ष्म |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८ | ८ | ०वासनवत् ? | ०वासनवत् । (?) |
| ६४ | ४ | सुगमम् | सुगमम् ॥ ४७ ॥ |
| ६४ | १३ | एवत्यर्थः । | एवेत्यर्थः । |
| ६५ | २ | केन | केन- |
| ६८ | १ | साधु | साधु- |
| ६९ | २२ | आहोश्वित् | आहोस्वित् |
| ७१ | १२ | दुः खप्राया | दुःखप्राया |
| ७१ | १४ | भूतमर्गः | भूतसर्गः |
| ७१ | २१ | जरामणर | जरामरण |
| ७२ | १२ | दुः | दुः- |
| ७२ | १४ | भहदादि | महदादि |
| ७२ | २० | इय | इव |
| ७५ | ५ | स्नुषा | स्नुषा |
| ७५ | १० | के चिदा० | केचिदा० |
| ७६ | १ | के चित् | केचित् |
| ७६ | १८ | सहसैवं | सहसैव |
| ७७ | ३ | विशूची | विसूची |
| ७९ | १ | किं | किं- |
| ७९ | १८ | सर्वनिषेधां | सर्वनिषेधो |
| ८१ | ५ | हेतोरु-प· | हेतोरुत्प· |
| ८४ | १९ | विशेषवृत्तिः | च शेषवृत्तिः |



॥ श्रीः ॥

# साङ्ख्यकारिका ।

दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥
दृष्टवदानुश्रविकः स ह्यविशुद्धक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥
मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥
दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥
प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥
सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चाऽसिद्धं परोक्षमाप्तागमात्साद्धम् ॥ ६ ॥
अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ ७ ॥
सौक्ष्म्यात्तदनुपलब्धिर्नाऽभावात् कार्यतस्तदुपलब्धिः ।
महदादि तच्च कार्यं प्रकृतिविरूपं सरूपं च ॥ ८ ॥
असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥
हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥
प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥
सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।

गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥
अविवेक्यादिः सिद्धस्त्रैगुण्यात्तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याऽव्यक्तमपि सिद्धम् ॥१४॥
भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥
सङ्घातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च ॥ १७ ॥
जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥
तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥
तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ २० ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥
प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥
अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥
अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्तते सर्गः ।
ऐन्द्रिय एकादशकस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥
सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥
बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षूरसननासिकाख्यानि ।
वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः ॥ २६ ॥
उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥
शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥

स्वालक्षण्या वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥
युगपच्चतुष्टयस्य हि वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥
स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥
करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।
कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥
अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥
बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।
वाग्भवति शब्दविषया शेषाण्यपि पञ्चविषयाणि ॥ ३४ ॥
सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥
एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्याऽर्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥
सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥
तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ॥
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥
सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥
पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥
चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा छाया ।
तद्वद्विना विशेषैस्तिष्ठति न निराश्रयं लिङ्गम् ॥ ४१ ॥
पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥
सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥
धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।

ज्ञानेन चाऽपवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥
वैराग्यात्प्रकृतिलयः संसारो राजसाद्भवति रागात् ।
ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५ ॥
एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्देन तस्य भेदास्तु पञ्चाशत् ॥ ४६ ॥
पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥
भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥
एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥
आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च नव च तुष्टयोऽभिमताः ॥ ५० ॥
ऊहः शब्दोऽध्ययनं दुःखविघातत्रयं सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥
न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥
अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥
ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥
अत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।
लिङ्गस्याऽविनिवृत्तेस्तस्मात् दुःखं समासेन ॥ ५५ ॥
इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥
वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥
औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥
रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्याऽर्थमपार्थकं चरति ॥ ६० ॥
प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥
तस्मान्न बध्यते नापि मुच्यते नाऽपि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥
रूपैः सप्तभिरेवं बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥६३ ॥
एवं तत्त्वाभ्यासान्नाऽस्मि न मे नाऽहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥
तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ ६५ ॥
दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नाऽस्ति सर्गस्य ॥ ६६ ॥
सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवत् धृतशरीरः ॥ ६७ ॥
प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥
पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुलीकृतं तन्त्रम् ॥ ७० ॥
शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चाऽपि ॥ ७२ ॥
तस्मात्समासदृष्टं शास्त्रमिदं नार्थतश्च परिहीनम् ।
तन्त्रस्य [१][च] बृहन्मूर्तेर्दर्पणसङ्क्रान्तमिव बिम्बम् ॥ ७३ ॥

॥ इतीश्वरकृष्णविरचितसाङ्ख्यकारिका समाप्ता ॥

---

[१] अत्र चकारसत्त्वे छन्दोभङ्गाच्चकारः प्रामादिक इति प्रतिभाति ।

साङ्ख्यकारिकाया अकारादिक्रमेण-

# सूची ।

—:०:—

—:०:—

# अथ माठरवृत्तिसहिता साङ्ख्य-कारिका ।

सर्वविद्याविधातारमादित्यस्थं सनातनम् ।
नतोऽस्मि परया भक्त्या कापिलं ज्योतिरीश्वरम् ॥ १ ॥
कपिलाय नमस्तस्मै येनाविद्योदधौ जगति मग्ने ।
कारुण्यात्साङ्ख्यमयी नौरिह विहिता प्रतरणाय ॥ २ ॥
नमस्कृत्य तु तं तस्य वक्ष्ये ज्ञानस्य कारणम् ।
हिताय सर्वशिष्याणामल्पग्रन्थसमुच्चयम् ॥ ३ ॥

**दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥**

अस्या आर्याया उपोद्घातः क्रियते—

स्थानं निमित्तं वक्ता च श्रोता श्रोतृप्रयोजनम् ।
सम्बन्धाद्यभिधानं च उपोद्घातः स उच्यते ॥

इह हि भगवान्महर्षिः सांसिद्धिकधर्मज्ञानवैराग्यैश्वर्यसम्पन्नो भगवतः पुराणपुरुषस्यावतारो जगदनुजिघृक्षया प्रजापतेः कर्दमस्य पुत्रः स्वायम्भुवस्य मनोर्दुहितरि देवहूत्यां कपिलो नाम बभूव । स तेन गुणपुरुषान्तरोपलब्धिरूपेण ज्ञानेनापारपारं दिदर्शिषया हस्तावलम्बेनेव, कालाहिदंदश्यमानजगतः सुधामणिनेव, दुश्चिकित्स्यस्य भवव्याधेरपनयनाय सम्यगौषधेनेव, अविद्यान्धकारप्रध्वंसनप्रदीपेनेव, मुक्तिमार्गविरोधिमोहवृक्षाविव्रश्चनकुठारेणेवाऽमुनाऽवबोधेन सम्पन्नोऽन्धे तमसि मज्जज्जगदिदमद्राक्षीत् । तदवलोक्यास्य कारुण्यमुदपादि । अहो खल्विदं

ननु दुःखेभ्य एव जिज्ञासा समुत्पन्ना कथं तेषामेवाभावाय कारणत्वमुपयाति । न हि जनयित्रीसकाशादुत्पन्नस्तनयस्तस्या एव व्यापादनं कुरुते । सत्यम् । इह लोके यद्यस्मादुत्पद्यते तत्तस्यापि विपत्तिकारणं दृश्यते । यथा कर्कटकोऽश्वतरो वा जनयित्र्याः समुत्पन्नस्तामेव व्यापादयति । यद्वा यथा कश्चिदाशीविषः शुष्कतृणबहुलप्रदेशे स्थित. प्रतिसर्पं दृष्ट्वा क्रुद्धस्तस्य मुखनिःश्वासनिर्गतो वह्निस्तृणानि तं वाऽपि सर्पं ददाह । अमुना न्यायेन दु खेभ्य एव जिज्ञासा निष्पन्ना दुःखानामेवाभावं करिष्यतीत्यर्थसङ्गतिः ।

अत्रोच्यते । **दृष्टे साऽपार्था चेत्** । चेदित्ययं निपात शङ्कायां वर्तते । इह लोके सकलसमुत्पन्नदु.खानां प्रतीकारोऽस्त्येव किं तदर्थं कपिलोपसर्पणेनेति भावः । तमेव हेतुं दृष्टं दर्शयति । शारीराध्यात्मिकानां ज्वरातीसारादिसकलव्याधीनां सन्त्येवागदङ्कारा अष्टाङ्गायुर्वेदविदो भिषजः कायशल्यशलाकाविषोन्मादक्लीबजराकुमारचिकित्सानिपुणाः । मानसस्याध्यात्मिकतापस्य प्रतीकारः प्रियवस्तुसंयोगादप्रियस्य दूरतः परिहरणाच्च । आधिभौतिकस्य तु ग्रामनगरादिकल्पनया प्रहाणोपपत्तिः । आधिदैविकस्य अभिवातयातप्रावरणावरणादिभिः । अतस्तदभिघातकारणात् किं कपिलोपसर्पणेनेति भाव । तथा च लौकिकानामाभाणकः—

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्य लीलया सिद्धौ को विद्वान् यत्नमाश्रयेत् ॥

अत्रोच्यते—न । न इत्ययं पूर्वपक्षवाक्यनिषेधे । नैवं वाच्यमित्यर्थः । **एकान्तात्यन्ततोऽभावात्** । एकान्ततोऽवश्यं

त्वदुक्तहेतुभिर्न प्रतीकारः। यतश्चिकित्सकानां सुप्रयुक्तागदानां यथाशक्ति यततामपि कदाचिज्जन्तुर्विपद्यते कदाचिज्जीवति। वैद्यगृहेऽपि वधूपुत्रकलत्रभ्रातृपितृप्रभृतीनामपरिहार्यमरणदर्शनान्नायमैकान्तिकप्रतीकार आध्यात्मिकस्य। अपरम् अत्यन्ततोऽपि नासौ प्रतीकारः। अगदेन नीरुजीकृतानामपि ज्वरादीनां पुनः कतिपयदिवसैरुत्पत्तिदर्शनात्। अतः सर्वथा आत्यन्तिकोऽपि न दृष्टः प्रतीकार आध्यात्मिकदुःखापनयने समर्थः। वसन्तादीनामपगतानामपि पुनरागमनवत्। भवन्ति चात्र श्लोकाः—

पुनर्दाहः समुत्पन्नः पुनर्जातश्च वेपथुः।
बाधते च पुनर्हिक्का ज्वरश्च पुनरागतः॥

अन्यच्च—

पुष्पिताक्षः शलाकी च कुष्ठी कायचिकित्सकः।
पृच्छन्ति बालभिषजं कथं ते दारका मृताः॥

किञ्च नास्ति सम्यग्धातुपरिज्ञाननिपुणतया भैषज्यम्। तथा हि—

यानि कानि च मूलानि येन केन च पेषयेत्।
यस्मै कस्मै च दातव्यं यद्वा तद्वा भविष्यति॥

अन्यच्च—कार्यार्थिजनद्रव्यभक्षणाय स्वशक्तिख्यापनाय च स्वल्पमपि रोगं पुरस्ताद्वर्धयन्ति भिषजः। ततश्च कदाचिदसौ तेषामेवासाध्यतामायाति। तथा च—

वैद्य वैद्य नमस्तुभ्यं क्षपिताशेषमानव।
त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते॥

एवमसौ दृष्टेनागदादिहेतुना, एकान्ततोऽवश्यम्, अत्यन्ततः सर्वथा, शारीरस्याध्यात्मिकदुःखस्य न प्रतीकारः। एवं

मानसस्यापि शब्दादिप्रियसंयोगादपि कदाचिन्न निवृत्तिः। एवमाधिभौतिकमप्युपायैः कदाचित् व्यपैति कदाचिच्च नैति। एवमाधिदैविकमपि कदाचिद् व्यपैति कदाचिच्च न। किञ्च व्यपगतिरपि दुःखस्य पुनरुत्पादादनर्थिकेति। अस्य तु शिष्यस्यैकान्तिक आत्यन्तिकश्च दुःखव्यपगमे हेतुरिष्टः। तस्मादुक्तं तदर्थं गुरूपसर्पणमिति ॥ १ ॥

यद्येवं तदा दृष्टव्यतिरेकेणाप्यानुश्रविकः श्रुतिप्रणीतः स्वर्गादिसाधनरूपो यज्ञादिर्हेतुरस्तु। नाकपृष्ठेऽपि तापत्रयासम्भवात्। तत्रैकान्तिकमात्यन्तिकं वानुश्रवे वेदे श्रूयते। गुरुणोक्तं पश्चाद्वेदं शृण्वन्ति शिष्या इत्यनुश्रवो वेदः। तत्र भव आनुश्रविकः। श्रौतो यज्ञादिरूपोऽस्य दुःखत्रयप्रतीकारहेतुरुचितोऽस्ति इति। एवं ह्याह—'तरति मृत्युं, तरति शोकं, तरति पाप्मानं, तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इति। यच्चैनं देवाः पुनरप्याहुः 'अपाम सोममभृता अभूमागन्म ज्योतिरविदाम देवान्। किं नूनमस्मांस्तृणवदरातिः किमु धूर्तिरमृतमर्त्यस्य' इति। इह श्रुतावैकान्तिकमात्यन्तिकं च फलं श्रूयते। अत्रास्य व्याख्या-

कदाचित् किलेन्द्रो देवानुपस्थितान्निशम्य इत्यवोचत्। भो भो देवत्वादन्यदपि किमप्यस्ति सुखम्। ततस्ते देवा ऊचुः नास्त्यन्यत्सुखम्। अत एवास्मन्निवासस्य नाक इत्यभिधानम्। कमिति सुखनाम तस्य निषेध अकम् असुखं तन्न इति नाकम्। केवलं सुखमेव। द्वौ नञौ प्रकृतमर्थं गमयतः। तत प्राहेन्द्रः– कथमिति। ततस्ते ऊचुः–अनेन हेतुना अपाम पीतवन्तः। सोमं यज्ञे सोमरसं, तेन तत्पानेन अमृता अमरा अभूम सम्पन्नाः। किं च अगन्म प्राप्तवन्तः ज्योतिः स्वर्गम्। अन्यच्च अविदाम जानीमः देवान्। अस्मिन् स्वर्गे इयन्तो देवा इति विद्मः। किमित्या-

क्षेपे। नूनं निश्चितम्। अस्मान् अस्माकम् विभक्तिविपरिणामः। तृणवत् कर्ता। अरातिः शत्रुर्मृत्युः। किंवा धूर्तिर्जरा अस्माकं करिष्यति। अमृतमर्त्यस्य अमृतपायिनां मर्त्यानाम् इति। 'बहुलं छन्दसी'ति वचनविपरिणाम। एवमन्योऽपि यः सोमं पास्यति तस्यैकान्तिकोऽवश्यमात्यन्तिक सर्वथा दुःखत्रयाभिघातो भविष्यति। अतो ब्रूमः किं प्रव्रज्यया साङ्ख्यज्ञानेन वा कार्यं वेदोक्तं करिष्यामः। दुःखप्रतीकारश्च स्वर्गो भावीति वेदान्तवादिनां वचनमुपश्रुत्य साङ्ख्याचार्यस्तन्निवारणाय स्वमतप्रतिष्ठार्थं च द्वितीयामार्यामाह--

**दृष्टवदानुश्रविकः स ह्यविशुद्धः क्षयातिशययुक्तः।**
**तद्विपरीत श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥ २॥**

य एष आनुश्रविक श्रौतोऽग्निहोत्रादिक स्वर्गसाधनतया तापत्रयप्रतीकारहेतुरुक्तः सोऽपि दृष्टवत् अनैकान्तिकः प्रतीकारः। तथा हि 'मध्यमपिण्डं पुत्रकामा पत्नी प्राश्नीयात् 'आधत्त पितरो गर्भम्'इति मन्त्रेण। तदेवं वेदवचसा बहून् पिण्डान् परःशतानश्नाति यावदेकोऽपि पुत्रो न जायते। तथा "पश्येम शरदः शतं जीवेम शरदः शतम्"इति श्रुतावास्ते। परं गर्भस्थो जातमात्रो बालो युवापि कुमारो म्रियते। किं चान्यत्–स श्रौतो हेतुः अविशुद्धः पशुहिंसात्मकत्वात्। क्षययुक्त पुनः पातात्। अतिशययुक्तः तत्रापि स्वामिभृत्यभावश्रवणात्। उक्तं च–

"षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य वचनादूनानि पशुभिस्त्रिभिः॥"

पशुवधोऽग्निष्टोमे मानुषवधः गोसवव्यवस्था सौत्रामण्यां सुरापानं रण्डया सह स्वेच्छालापश्च ऋत्विजाम्। कल्पसूत्रेऽन्यदपि अकृत्यं भूरि कर्तव्यतयोपदिश्यते। 'ब्रह्मणे ब्रा-

ह्मणमालभेत क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे तस्करं नारकाय वीरहणम्' इत्यादिश्रवणात् ।

किञ्च—

यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् ।
भूतहत्यां तथैवेमां न यज्ञैर्मार्ष्टुमर्हति ॥
न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुद्ध्यतः ।

'तद्यथाऽस्मिन् लोके मनुष्याः पशूनश्नन्ति तथाभिभुञ्जत एवममुष्मिन् लोके पशवो मनुष्यानश्नन्ति' इति श्रुतिशतश्रवणात् । अन्यच्च—

वृक्षान् छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम् ।
यज्ञैश्चेद्गम्यते स्वर्गो नरकः केन गम्यते ॥

इत्यविशुद्धियुक्तः सर्वथा श्रौतो दुःखत्रयप्रतीकारहेतुः । अथ 'अपाम सोमममृता अभूम' इति प्रागुक्तम् । तत्रेदं प्रत्युत्तरम् । सोमपायिनामपि नृगनहुषेन्द्रययातीनां वधबन्धपरिक्लेशा बहुविधाः । कर्मण उपभोगादितरेषां पतनं च । एकाहादीनां सत्राणां दिनपरिमाणवतां कारणानां परिमाणवदेव स्वर्गादि कार्यं दृष्टम् । कारणानुगमत्वात्कार्यस्य । परिमाणवन्मृत्पिण्डात्परिमाणवानेव घटः स्यात् । एवमानुश्रविकाणां फलपरिमाणत्वात् पुनः क्षयः । अतिशययुक्तश्च । यथा आढ्यमवलोक्य दरिद्रस्य दुःखं स्यात्, सुरूपं च वीक्ष्य कुरूपस्य, प्राज्ञं दृष्ट्वा मूर्खस्य तथा शताप्सरसं स्वर्गिणं दृष्ट्वा पञ्चाप्सरसस्तं दृष्ट्वैकाप्सरसो दुःखमुत्पद्यते। एवमयं दृष्टवत् । तदेवमन्योन्यातिशयात् स्वर्गेऽपि दुःखमभ्यावृत्तम् । तस्मात् तद्विपरीतः श्रेयान् । ताभ्यां दृष्टानुश्रविकाभ्यां हेतुभ्यां विपरीतो विसदृश ऐकान्तिक आत्यन्तिको विशुद्धः अक्षय अनन्तफलः कैवल्याभिरनिश्चयो हेतुः

स श्रेयान् प्रशस्यः । कथं पुनरसौ भवतीत्याह—व्यक्ताव्यक्तज्ञविज्ञानात् । व्यक्तं च अव्यक्तं च ज्ञश्च तेषां त्रयाणां विज्ञानादनुभवात् । भवति ह्यसौ अवश्यं फलदानादैकान्तिकः, प्रकृतिज्ञानादात्यन्तिकः, यमनियमादिमत्त्वात् शुद्धः, शरीरभेदे पुनरनावेश्यत्वादक्षयफलः । कैवल्यादनुत्तरत्वाच्च निरतिशयफलमिति वाक्यशेषः । तत्र व्यक्तं बुद्ध्यहङ्कारेन्द्रियतन्मात्रभूतभेदात्त्रयोविंशतिकम् । अव्यक्तं प्रधानम् । व्यक्तोत्पत्तिकारणम् । न ह्यकारणं कार्यमित्यस्य सिद्धिः । ज्ञः पुरुषः । सन्निधिसत्तामात्रेण चुम्बक इव लोहस्य प्रवृत्तिकारणम् । अतः प्रधानस्य जडस्य प्रवृत्तिहेतुरयमस्तीति सिद्धिः । एतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तज्ञसंज्ञानि । यद्विज्ञानादवश्यं सर्वथा तापत्रयेण विमुच्यते ॥ २ ॥

नन्वमीषां कतिधा प्रविभाग इत्यत्रोच्यते चतुर्धा । कथमिति चेत्तदुच्यते—

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥३॥**

मूलप्रकृतिः प्रधानं मूलभूतत्वात् । मूलं सप्तानां प्रकृतिविकृतीनामादिरित्यर्थः । प्रकरणात्प्रकृतिः । प्रसवधर्मकत्वात्सा प्रकृतिः । न विकृतिरविकृतिरन्यस्मादनुत्पत्तेः । कारणमेव सा न कार्यमित्यर्थः । अनुत्पन्नत्वादुत्पादकत्वाच्च । महदाद्यास्तु सप्त प्रकृतयो विकृतयश्च । महानहङ्कारः पञ्चतन्मात्राणि चेति सप्त प्रकृतयोऽन्येषां कारणतया, विकृतयश्च कार्यतया स्वयम् । तत्र व्यक्तिमाह—प्रधानात् बुद्धिरिति विकृतिः, सा च अहङ्कारं जनयतीति प्रकृतिः । अहङ्कारो महत उत्पन्न इति विकृतिः, त-

न्मात्राणि जनयतीति प्रकृतिः । तन्मात्राण्यहङ्कारादुत्पन्नानीति विकृतयः पञ्चापि,ततः पञ्च महाभूतानि जायन्त इति प्रकृतयः । उत्पन्नत्वादुत्पादकत्वाच्च सप्तेमाः प्रकृतयो विकृतयश्च । तन्मात्राणि शब्दस्पर्शरूपरसगन्धाख्यानि। षोडशकस्तु पुनर्विकार एव कार्यत्वात् । न तु तस्य प्रकृतित्वमकारणत्वात् । तद्व्यक्तिमाह—वैकृतिकादहङ्कारादुत्पन्नान्येकादशेन्द्रियाणि तन्मात्रेभ्यः पञ्चमहाभूतानीति षोडशकोऽयं गणो विकारोऽन्यस्मादुत्पन्नो न हि ततोऽन्यदुत्पद्यत इत्यर्थः । उत्पन्नत्वादनुत्पादकत्वाच्च । पुरुषस्तु पुनर्न प्रकृतिरनुत्पादकत्वात् न च विकृतिरनुत्पन्नत्वात् । नैवासौ कारणं न च कार्यमित्यर्थः । एवमेष प्रकृतिः, प्रकृतिविकृतिः, विकृतिः, न प्रकृतिर्न च विकृतिरितिभेदाच्चतुर्धा प्रकृतिविकृतिविभागोऽभिहितः ॥ ३ ॥

एषां व्यक्ताव्यक्तज्ञानां प्रमेयाणां साधनाय प्रमाणान्याह । प्रमाणप्रमेयप्रमातृप्रमितिक्रमेण हि सकलस्य सिद्धिर्दृष्टा ।

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥४॥**

दृष्टमिति प्रत्यक्षपर्यायः । अक्षमिन्द्रियं प्रतीत्य यदुत्पद्यते ज्ञानं तत् प्रत्यक्षं दृष्टमुच्यते । यथा श्रोत्रादीनां शब्दादयः पञ्चेन्द्रियार्थाः पञ्चानां दृष्टं प्रमाणम् । प्रथममिदं मुख्यं सकलप्रमाणानाम् । योऽर्थोऽमुना दृष्टेन साधयितुं न पार्यते तत्रानुमानस्यावकाशः । तच्च त्रिसाधनं पञ्चसाधनं वा । त्र्यवयवं पञ्चावयवमित्यपरे । तच्च त्रयस्त्रिंशदाभासरहितं प्रत्यक्षाभावे प्रतन्यतेऽनुमानम् । कमपि हेतुमन्वीक्ष्य तस्य हेतोः पश्चान्मीयत इत्यनुमानम् । यथा धूमं हेतुमन्वीक्ष्य महानस इव पूर्वं वह्निदर्श-

नादग्नेरस्तित्वं साध्यत इत्यनुमानम् । प्रत्यक्षानुमानाभ्यां योऽर्थः साधयितुं न शक्यस्तत्राप्तवचनम् । यथा स्वर्गेऽप्सरसः सन्ति, नन्दनं वनं, तत्र विशेषाः शब्दादयो विषया, विमानेऽधिवास इति । आप्ता रागद्वेषादिरहिता ब्रह्मसनत्कुमारादयः, श्रुतिर्वेदः, ताभ्यां उपदिष्टं तथेतिश्रद्धेयमाप्तवचनम् ।

नन्वर्थापत्तिः सम्भवोऽभावः प्रतिभा ऐतिह्यमुपमानं चेतिप्रभृतीनि सन्ति बहूनि प्रमाणान्तराणि कथमत्र त्रिविधं प्रमाणमिति सङ्गतिः । अत्रोच्यते—सर्वप्रमाणसिद्धत्वात् । सर्वाणि हि प्रमाणानि प्रमाणत्रयेऽविरुद्धानि । तत्र पीनो देवदत्तो दिवा नं भुङ्क्त इत्युक्ते रात्रौ भुङ्क्त इत्यर्थः । साऽर्थापत्तिरनुमानमेव । प्रस्थ इत्युक्ते चत्वारः कुडवा इति बोधः सम्भवः । सोऽप्यनुमानमेव । अभावश्च प्रागितरेतरप्रध्वंसात्यन्ताभावभेदाच्चतुर्द्धा । यथा व्रीहिशोषणदर्शनान्न वृष्टो देव इति वृष्टेरभावं साधयति । सोऽप्यनुमानभेदः । प्रतिभा यथा—

दक्षिणेन तु विन्ध्यस्य सह्यस्य तु यदुत्तरम् ।
पृथिव्यामासमुद्रायां स प्रदेशो मनोरमः ॥

इत्युक्ते तत्र शोभना गुणाः सन्तीति प्रतिभोत्पद्यते । प्रतिभा जानतां ज्ञानम् । साऽप्यनुमानवमेव । ऐतिह्यं यथा—अस्मिन् वटे यक्षिणी प्रतिवसति इति जना वदन्ति इत्युक्ते, सा विघ्नं करोति, धनादि यच्छतीति ज्ञानं, तदप्यनुमानमेव । उपमानम्—यथा गौस्तथा गवय इत्यप्यनुमानमेव । किं च तृ(१)षितस्याञ्जलिना, क्षुधितस्य पञ्चाङ्गुलियोगात्, पृथुलाक्षिप्रभृतिदर्शनात् दुर्बलस्य, तर्जनीपङ्कदर्शनात् ? ज्ञानमित्याद्यनुमानमेव । तस्मात्त्रिष्वेवान्यदन्तर्भवतीति युक्तमभिहितं त्रिविधं प्रमाणम् । इष्टमिति अभिप्रे-

(१) कैश्चित्प्रमाणतया परिगृहीतं चेष्टादिकं निरस्यति ।

तमित्यर्थः । तेन प्रमाणेन किं साध्यमित्याह-प्रमेयसिद्धिः प्रमाणाद्धि। यस्मात्प्रमेयं सकलं प्रमाणेन प्रमीयते यथा तुलया चन्दनादि, कर्षादिना घृतादि, प्रस्थादिना वा व्रीह्यादीत्यादिवत्। प्रत्यक्षानुमानागमाः प्रमाणानि । प्रमेया व्यक्ताव्यक्तज्ञाः । प्रमाता आत्मा । तत्र त्रयोविंशतिकं व्यक्तम् । अव्यक्तं प्रधानम् । ज्ञः क्षेत्रज्ञः । तदमीषां मध्ये किञ्चित्प्रत्यक्षेणान्यदनुमानेनेतरदाप्तानुमानाभ्यां प्रमीयते । तस्मादाचार्येण भगवता युक्तमभिहितम्—'प्रमेयसिद्धिः प्रमाणाद्धि' इति ॥ ४ ॥

तत्र त्रिविधस्य प्रमाणस्य पृथक् लक्षणमुपन्यस्यते ।

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥**

विषयं विषयं प्रति योऽध्यवसायो नेत्रादीनामीन्द्रियाणां पञ्चानां रूपादिषु पञ्चसु, तत्प्रत्यक्षं प्रतिपत्तिरूपं दृष्टाख्यम् । अनुमानं त्रिविधम् । त्रिसाधनं त्र्यवयवं पञ्चावयवमित्यपरे । तदाख्यातं कथितम् । पक्षहेतुदृष्टान्ता इति त्र्यवयवम् । पक्षः प्रतिज्ञापदम् । यथा—वह्निमानयं प्रदेशः । साध्यवस्तूपन्यासः पक्षः । इतरे पक्षाभासाः प्रत्यक्षविरुद्धादयो नव । त्रिरूपो हेतुः । त्रैरूप्यं पुनः पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षे चासत्त्वमिति । अत्रोदाहरणं यथा धूमवत्त्वादिति । अन्ये हेत्वाभासाः चतुर्दश । असिद्धानैकान्तिकविरुद्धादयः । साधर्म्यवैधर्म्याभ्यां द्विविधं निदर्शनम् । यथा महानसम् । इतरे निदर्शनाभासा दश । एवं त्रयस्त्रिंशदाभासरहितं त्र्यवयवमनुमानम् । पञ्चावयवमित्यपरे । तदाह—अवयवाः पुनः प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्ना-

या । एवं पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनं परार्थमनुमानम् । तच्च त्रिविधम् । पूर्ववत् शेषवत् सामान्यतोदृष्टं च । तत्र विशिष्टमेघोन्नतिदर्शनात् भावित्रीं वृष्टिं सम्भावयति । पूर्वमियं दृष्टेति पूर्ववत् । नदीपूरदर्शनादुपरि वृष्टो देव इति वा प्रतीतिः । शेषवद्यथा—समुद्रोदकबिन्दुं प्राश्य शेषस्य लवणभावोऽनुमीयते इति शेषवत् । सामान्यतो दृष्टम्—पुष्पिताम्रदर्शनात् अन्यत्र पुष्पिता आम्रा इति । पुनर्यथा—बहिरुद्योत इति केनाप्युक्तं, तत्रापरेणाप्युक्तम् । चन्द्र उदितो भविष्यतीत्यर्थसङ्गतिः । तल्लिङ्गलिङ्गिपूर्वकमिति । लिङ्गेन त्रिदण्डादिदर्शनेनादृष्टोऽपि लिङ्गी साध्यते नूनमसौ परिव्राडस्ति यस्येदं त्रिदण्डमिति । आप्तश्रुतिराप्तवचनं तु । तृतीयं प्रमाणम् । आप्ता ब्रह्मादय आचार्याः, श्रुति(१)र्वेदस्तदेतदुभयमाप्तवचनम् । आप्तिः साक्षादर्थप्राप्तिर्यथार्थोपलम्भः तया वर्तत इत्याप्तः साक्षात्कृतधर्मा यथार्थाप्त्या श्रुतार्थग्राही तदुक्तमाप्तवचनम् । तत्रापि प्रसिद्धिलक्षणा गुणयोगात्तिस्रः शब्दवृत्तयः । तत्र लाक्षणात्रैविध्यम् । जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेत्यादि प्रमाणशास्त्रेषु बहुतरः प्रपञ्च आस्ते । तत्र प्रक्रान्तमेव तावदभिधीयते भगवतः कपिलस्य मतम् ।

आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः ।
क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात् ॥
स्वकर्मण्यभियुक्तो यो रागद्वेषविवर्जितः ।
पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेयः स तादृशः ॥
तदेवमेतत्त्रिविधं प्रमाणम् ॥ ५ ॥

---

(१) आर्षत्वादेकवचनम् । सहितशब्देन सह मध्यमपदलोपी समासो वा ।

तदेवं व्यक्ताव्यक्तज्ञाख्यस्य प्रत्यक्षादित्रिविधप्रमाणेषु केन कस्य सिद्धिः स्यात् इति अत्रोच्यते—

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात्साध्यम् ॥ ६ ॥**

अत्र प्रधानपुरुषावतीन्द्रियौ तयोः सामान्यतो दृष्टादनुमानात्सिद्धिः । यस्मान्महदादि लिङ्गं त्रिगुणं दृष्ट्वा कार्यं तत्कारणमदृष्टमप्यस्ति त्रिगुणं चेति साध्यते प्रधानम् । न ह्यसतः सदुत्पत्तिः स्यादिति । न च कारणासदृशं कार्यं स्यादिति । व्यक्तं तु प्रत्यक्षेणैव साधितमिति तदर्थे न प्रयत्नः । यस्माज्जडमपि प्रधानं प्रसूतिक्रियायां प्रवर्तते तस्मादस्ति लोहस्य चलनक्रियाशक्तिहेतुचुम्बकवदवश्यं पुरुष इति ज्ञसिद्धिः ॥ ६ ॥

ननु प्रत्यक्षेण योऽर्थो नोपलभ्यते स सर्वथा नास्तीति मतं सङ्गच्छते । यथा द्वितीयमनीश्वरशिरः, तृतीयो बाहुः, शशविषाणादयो वा । एवं प्रधानपुरुषौ नोपलभ्येते तस्मात्तावपि न स्त इत्याशङ्कानिरासायाह—

**अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।**
**सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ ७ ॥**

इह लोके सतामप्यर्थानामष्टधा नोपलब्धिः । तथा हि दर्शयति—यथा सतामपि देवदत्तविष्णुमित्रयज्ञदत्तानां देशान्तरगतानामतिदूरान्नोपलब्धिः । तत् किं ते न सन्ति । यथा वा चक्षुरतिसामीप्यात् कज्जलं नोपलभते । तत्किमिदं नास्ति । यथा बधिरान्धौ शब्दरूपे नोपलभेते । तत्किं ते न स्तः । अनवस्थितचित्तो राजानमपि यान्तं न पश्यति । तत्किमसौ न गतः । धूमोष्मत्रुटिनीहारपरमाणवो नोपलभ्यन्ते । तत्किममी-

पामभावः । कुड्येन व्यवहितं नोपलभ्यते । तत्किं नास्ति । सूर्यादितेजसाऽभिभूतानां ग्रहनक्षत्रतारकादीनामनुपलम्भात् तेषां किमभावः शक्यते परिकल्पयितुम् । मुद्गराशिकुवलयामलकमौक्तिककपोतादिनिकुरम्बे क्षिप्तं समानं यदि नोपलभ्यते तदेवेदमिति । तत्किं नास्ति । एवमष्टधा सतामप्यनुपलम्भोऽभिहितः । इदानीमसतां चतुर्धा भवति । तत्रोच्यते—प्राक्प्रध्वंसेतरेतरात्यन्ताभावभेदात् । तत्र मृत्पिण्डे घटः प्रागुत्पत्तेर्नोपलभ्यत इति प्रागभावः । प्रध्वंसाभावो यथा मुद्गराभिघातात् प्रध्वस्तो घटो नोपलभ्यते । इतरेतराभावो यथा अश्वे गोत्वम्, गवि अश्वत्वम् । अत्यन्ताभावो यथा द्वितीयमनीश्वरशिरः, तृतीयो बाहुः, शशविषाणादयो वा । एवमियं द्वादशधा अनुपलब्धिः । सतामष्टधा ह्यसतां चतुर्धा । एवं प्रधानपुरुषावपि सन्तौ नोपलभ्येते ॥ ७ ॥

तदनयोर्मध्ये केन हेतुनेमौ नोपलभ्येते । तदुच्यते—

**सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धिः ।**
**महदादि तच्च कार्यं प्रकृतिविरूपं सरूपं च ॥ ८ ॥**

तस्य प्रधानस्यानुपलब्धिरनवगमः सौक्ष्म्यात् हेतोर्नाभावात् । सूक्ष्मं प्रधानं शब्दाद्यलक्षणत्वात् परमाण्वादिवत् । न पुनरेवं, यन्नास्ति प्रधानमतो नोपलभ्यते । किं तु अस्ति प्रधानं नोपलभ्यते सौक्ष्म्यात्परमाण्वादिवत् । तर्हि कथमुपलभ्यत इति । अत्राह—कार्यतस्तदुपलब्धिः । कार्यं दृष्ट्वा कारणमनुमेयं वटधान्यवत् । यथा वटधान्यं कारणं वटं कार्यमालोक्यानुमीयते । एवं सदेव प्रधानं कारणं महदादेः सतः कार्यादनुमीयते । न ह्यसतः सदुत्पत्तिर्भवतीति । महदादि-

महानहङ्कारः पञ्चतन्मात्राणि एकादशेन्द्रियाणि पञ्च महाभूतानि चेति त्रयोविंशतिकम् । एतन्महदादि कार्यं त्रिगुणं दृष्ट्वाऽनुमीयते अस्ति प्रधानमपि त्रिगुणं कारणं यस्येदं त्रिगुणं कार्यमिति । किं चान्यत् । तच्च कार्यं प्रकृतिविरूपं सरूपं च । प्रधानाद्विसदृशं सदृशं चेत्यर्थः । सन्ति ते हेतवो यैरेतत् प्रधानं विसदृशं सदृशं च । यथा लोके पुत्रः पितुः सदृशो विसदृशः स्यात् यदि रूपेण तदा न गुणैः यदा गुणैस्तदा न रूपेणेति यावत् । तांश्च हेतूनुपरिष्टाद्वक्ष्यामः ॥ ८ ॥

तिष्ठतु तावदेतत् । अन्यत्पृच्छामः—किमेतन्महदादि प्रागुत्पत्तेः प्रधाने सत् जायते उतासत् सम्भवति । अत्राचार्याणां विप्रतिपत्तिरतः संशयः । अत्र वैशेषिका विप्रतिपन्ना असतः सद्भवतीति मन्यन्ते । मृत्पिण्डे हि प्रागुत्पत्तेर्घटो नास्तीति व्यवसितास्ते । अस्ति नास्तीति वराका जीवकाः । नैवास्ति न च नास्ति । एष बौद्धानां पक्षः । एवमन्योन्यविरोधवादिषु दर्शिषु को नाम निश्चयः । तदुच्यते । तत्र तावत्सदसद्वादिनो जीवकाः स्ववचनविरोधेनैव निरस्ताः । यदि सत्तदाऽसन्न भवति । उतासत्तदा सद्भावो न । यतः सदसतोरेकत्र विरोधात् । अत्र दृष्टान्तो यथा देवदत्तो मृतो जीवति चेतिवत् । बौद्धानां तु नास्ति न च नास्तीति पक्षपरिग्रहाभावात्तैः सह सञ्जल्प एव न युज्यते । वैशेषिकाणां तु असतः सद्भवतीति मतप्रतिषेधाय उच्यते—

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥ ९ ॥**

इह लोके सदेव सद्भवति । असतः करणं नास्ति । यदि

स्यात्तदा सिकताभ्यस्तैलं, कूर्मरोमभ्यः पटप्रावरणम्, वन्ध्यादुहितृभ्रूविलासः, शशविषाणं, खपुष्पं च स्यात् । न चास्ति तस्मादनुमीयते प्रधाने प्रागुत्पत्तेर्महदादिकमस्त्येव । उपादानग्रहणात् । इह लोके यो येनार्थी स तदुपादानग्रहणं करोति । तन्निमित्तमुपादत्ते । तद्यथा दध्यर्थी क्षीरस्योपादानं कुरुते । यदि चाऽसत्कार्यं स्यात्तदा दध्यर्थी उदकस्याप्युपादानं कुर्यात्, न च कुरुते, तस्मात् प्रधाने महदादि कार्यमस्तीति । किं च सर्वसम्भवाभावात् । इह लोके यद् यस्मिन् विद्यते तस्मादेव तदुत्पद्यते । यथा तिलेभ्यस्तैलं, दध्नो घृतम् । यदि चाऽसत्कार्यं स्यात्तदा सर्वं सर्वतः सम्भवेत्ततश्च तृणपांसुवालुकादिभ्यो रजतसुवर्णमणिमुक्ताप्रवालादयो जायेरन् । न च जायन्ते । तस्मात्पश्यामः सर्वसम्भवाभावादपि महदादि कार्यं प्रधाने सदेव सद्भवतीति । अतश्चास्ति—शक्तस्य शक्यकरणात् । इह लोके शक्तः शिल्पी करणादिकारणोपादानकालोपायसम्पन्नः शक्यादेव शक्यं कर्म आरभते नाशक्यमशक्यात् । तद्यथा—शक्तः कुम्भकारः शक्यादेव मृत्पिण्डात् शक्यदण्डचक्रसूत्रोदकविदलतलादिभिः सम्पन्नो घटशरावोदञ्चनादीन्यारभमाणो दृष्टः । न च मणिकादि, अशक्यत्वात्तावता पिण्डेन तस्य । यदि पुनः करणानियमो न स्यात् अशक्यादप्यशक्यमारभ्येत । तस्मात् सत् कार्यं स्यान्नासत् । किं च—कारणभावाच्च । कार्यं सदेव स्यात् । इह लोके यल्लक्षणं कारणं तल्लक्षणं कार्यं स्यात् । यथा कोद्रवेभ्यः कोद्रवा, व्रीहिभ्यो व्रीहयः स्युः । यदि चाऽसत्कार्यं स्यात् तदा कोद्रवेभ्यः शालीनामपि निष्पत्तिः स्यात् । न च भवति । तस्मात्कारणभावादपि पश्यामः प्रधाने महदादि कार्यमस्तीति । साधितमेवमेतैः

पञ्चभिर्हेतुभिः सत् कार्यम्। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यारभ्य 'सत्त्वेव सोम्येदमग्र आसीत्'[छां०अ० ६। खं०२] इति श्रुतेः ॥ ९ ॥

तत्र यदुक्तं पूर्वस्यामार्यायां 'प्रकृतिसरूपं विरूपं च' इति। तत्साधर्म्यवैधर्म्यप्रतिपादनाय इदमारभ्यते—

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥ १० ॥**

हेतुमदिति। यस्योत्पत्तिकारणमस्ति तद्धेतुमत्। हेतुरपदेशो निमित्तं प्रकृतिः कारणमित्यनर्थान्तरम्। प्रधानस्यैते पर्यायशब्दाः। तस्मात्प्रधानेन हेतुना सकारणमिदं महादिभूतपर्यन्तं त्रयोविंशतिकं लिङ्गम्। तथा हि— महत् बुद्धितत्त्वं तत्प्रधानेन हेतुमत्। तेनाहङ्कारोऽमुना एकादशेन्द्रियाणि तन्मात्राणि च। तैश्च भूतानीति सर्वमेवेदं परस्परहेतुमत्। अथ च द्विविधो हेतुः कारको ज्ञापकश्च। तत्र प्रधानबुद्ध्यहङ्कारतन्मात्रलक्षणश्चतुर्विधः कारकः। विपर्ययाशक्तितुष्टिसिद्ध्यनुग्रहभेदात्पञ्चधा ज्ञापकः। तत् द्विविधेनापि हेतुना युक्तं हेतुमदिदं सिद्धम्। किं च—अनित्यम् प्रलयं गच्छति। यस्मादुत्पत्तिमत्तस्मादनित्यम्। अकारणवत् नित्यमिति नित्यस्य लक्षणम्। तद्विपरीतमिदमतोऽनित्यम्। तद्यथा—मृत्पिण्डादुत्पन्नो घटः स चानित्यो दृष्टः। एवं महदादि प्रधानादुत्पन्नं तस्मादनित्यं तस्मिन्नेव च लीयते। तथा हि—प्रधाने बुद्धिस्तस्यामहङ्कारस्तस्मिन्निन्द्रियाणि तन्मात्राणि च तेषु भूतानि प्रलयकाले लीयन्ते। तस्मादनित्यम्। किञ्च—अव्यापि असर्वगतम्। यथा प्रधानपुरुषौ सर्वगतौ न तथेदमित्यर्थः। इदं हि यस्मिन्ने-

व प्रदेशेऽवस्थितं तस्मिन्नेव वर्तते । किं च–सक्रियम् । यस्मात्संसरणकाले महदादि कार्यं सूक्ष्मशरीरमाश्रित्य संसरति तस्मात्सक्रियम् । किं च–अनेकम् बहुविधं त्रयोविंशतिप्रकारम् । इतरच्च–आश्रितम् । यत् यस्मादुत्पद्यते तत्तदाश्रितम् । बुद्धिः प्रधानमाश्रिता, तां चाहङ्कारः, तं चेन्द्रियाणि तन्मात्राणि च, तानि महाभूतान्याश्रितानि । एवमाश्रितम् । लयं गच्छतीति लिङ्गम् । सावयवमिति । अवयन्तीत्यवयवा यथा पिण्डस्य हस्तपादाद्याः । शब्दस्पर्शरसरूपगन्धाद्यवयवसम्पन्नं व्यक्तम् । किं च–परतन्त्रम् पराधीनम् । यथा पितरि जीवति पुत्रो न स्वतन्त्र एवं व्यक्तम् । प्रधानतन्त्रा बुद्धिः, बुद्धितन्त्रोऽहङ्कारः, अहङ्कारतन्त्राणि इन्द्रियाणि तन्मात्राणि च, तन्मात्रतन्त्राणि महाभूतानीति । एवं परतन्त्रम् । व्यक्तमुक्तम् । एतद्विपरीतलक्षणमव्यक्तम् । अहेतुमत् अनुत्पन्नत्वात् । नित्यम् अकारणवत्त्वात् । व्यापि सर्वगतत्वात् । आब्रह्मस्तम्बपर्यन्तं पुरुषवत् व्याप्य प्रधानमवास्थितम् । निष्क्रियं सर्वव्यापकत्वात् । एकं सर्वकारणत्वात् । अनाश्रितं प्रभविष्णुत्वात् । अलिङ्गमनुत्पत्तिकत्वात् । निरवयवममूर्तत्वात् । स्वतन्त्रं सर्वोत्पत्तिकारणत्वात् ॥ १० ॥

एवमनया आर्यया व्यक्ताव्यक्तयोर्वैधर्म्यमभिहितम् । साधर्म्यमुच्यते—

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

त्रिगुणं व्यक्तं महदादि । प्रधानमपि त्रिगुणम् । कारणानुगतत्वात्कार्यस्य । यथा कृष्णतन्तुः कारणं पटः कार्यमपि कृष्णमेव भवति । त्रिगुणेन कार्येणास्य कारणमपि

त्रिगुणं भवतीति प्रधानं साध्यते । किं चान्यत् -अविवेकि व्यक्तम् । अमी गुणा इदं व्यक्तमिति विवेक्तुं न पार्यते, तथा प्रधानमपि इदं प्रधानं अमी गुणा इति न शक्यते पृथक् कर्तुम् । किं च-विषयो व्यक्तं महदादि । सुखदुःखमोहतया भोग्यं तत् पुरुषस्य । स हि तस्य भोक्ता । तथा प्रधानमपि सर्वपुरुषाणां क्षेत्रज्ञानां भोग्यम् । सामान्यं व्यक्तम् । गणिकावत् सर्वपुरुषाणाम् । तथा प्रधानमपि । अचेतनं व्यक्तम् । सुखदुःखमोहान्न चेतयति । तथा प्रधानमपि(१) । प्रसवधर्मि व्यक्तम् । बुद्धेरहङ्कारस्तत इन्द्रियाणि तन्मात्राणि च तेभ्यो भूतानि जायन्ते । एवं प्रधानमपि बुद्धिं प्रसूयते । उक्तमिदं व्यक्ताव्यक्तयोः साधर्म्यम् । इदानीं 'तद्विपरीतस्तथा च पुमान्'इत्युक्तं, तत्प्रतिपादयति । ताभ्यां व्यक्ताव्यक्ताभ्यां विपरीतः । तयोर्यत्साधर्म्यं 'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि'इत्युक्तम् । ततोऽसौ विपरीतो विधर्मी । अगुणो विवेकी अविषयोऽसामान्यः चेतनोऽप्रसवधर्मी चेति । वैधर्म्यमभिधाय साधर्म्यमाह--तथा च पुमानिति ।

'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।

सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्' ॥ इत्युक्तम् । तत् यथा व्यक्तादिसदृशं प्रधानं तथा प्रधानसधर्मा पुरुषः । तथा हि अहेतुमान्नित्यो व्यापी निष्क्रिय एकोऽनाश्रितोऽलिङ्गो निरवयवः स्वतन्त्र इति ॥ ११ ॥

तत्र त्रिगुणं व्यक्तमव्यक्तं च निर्गुणः पुरुष इत्युक्तम् । किमात्मका गुणा इत्यत्रोच्यते—

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।**
**अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥१२॥**

(१) कथम् ? अनुमीयते । इहाचेतनान्मृत्पिण्डादचेतन एव घट उत्पद्यते ।

तत्रायं समासः। प्रीतिश्चाप्रीतिश्च विषादश्च ते आत्मा स्वरूपं येषां गुणानां ते भवन्ति प्रीत्यप्रीतिविषादात्मकाः। तेषां लक्षणमुच्यते। तत्र प्रीत्यात्मकं सत्त्वम्। आत्मशब्दः स्वभावे वर्तते। कस्मात्सुखलक्षणत्वात्। यो हि कश्चित् कचित् प्रीतिं लभते तत्र आर्जवमार्दवसत्यशौचह्रीबुद्धिक्षमानुकम्पाज्ञानादि च। तत्सत्त्वं प्रत्येतव्यम्। अप्रीत्यात्मकं रजः। कस्मात्। दुःखलक्षणत्वात्। यो हि कश्चित्कदाचित् कचित् अप्रीतिमुपलभते तत्र द्वेषद्रोहमत्सरनिन्दास्तम्भोत्कण्ठानिकृतिवञ्चनाबन्धवधच्छेदनानि च(१)। तद्रजः प्रत्येतव्यम्। विषादात्मकं तमः। कस्मात्। मोहलक्षणत्वात्। यो हि कश्चित् कदाचित् कचित् मोहमुपलभते तत्र अज्ञानमदालस्यभयदैन्याऽकर्मण्यतानास्तिक्यविषादस्वप्नादि च। तत्तमः प्रत्येतव्यम्। किं चान्यत्–प्रकाशप्रवृत्तिनियमार्थाः(२)। प्रकाशश्च प्रवृत्तिश्च नियमश्च ते अर्था येषां तथोक्ताः। तत्र प्रकाशयितव्यमिति सत्त्वस्य, प्रवर्तितव्यमिति रजसः, नियन्तव्यं संहर्तव्यमिति तमसः। किं चान्यत्–अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः। तत्रापि समासः। अन्योन्याभिभवाश्च अन्योन्याश्रयाश्च अन्योन्यजननाश्च अन्योन्यमिथुनाश्च येषां गुणानामन्योन्यवृत्तयश्च विद्यन्ते तथोक्ताः। चशब्दः समुच्चये द्रष्टव्यः। प्रीत्यादयश्च तावत् प्रागभिहिताः। अन्योन्याभिभवाश्चेति रजस्तमसोरभिभवात् शान्ता वृत्तिरुत्पद्यते सत्त्वस्य धर्माद्या। सत्त्वतमसोरभिभवात् रजसो घोरा वृत्तिरुत्पद्यते अधर्माद्या। सत्त्वरजसोरभिभवात् तमसो मूढा वृत्तिरु-

(१) निकृतिः शाठ्यम्। 'कुसृतिर्निकृतिः शाठ्यम्' इत्यमरः।

(२) अर्थशब्दः सामर्थ्यवाची प्रयोजनार्थो वा। तथाच प्रकाशक्रियास्थितिशीला गुणा इत्यर्थः।

त्पद्यते अज्ञानाद्या । किं चान्यत्–अन्योन्याश्रयाश्च गुणाः । सत्त्वं हि प्रवृत्तिनियमावाश्रित्य प्रकाशयति । रजः प्रकाशनियमावाश्रित्य प्रवर्तयति । तमः प्रकाशप्रवृत्ती आश्रित्य नियमयति । त्रिदण्डाविष्टम्भवदमी वेदितव्या इति । किं चान्यत्–अन्योन्यजननाश्च गुणाः । अन्योन्यं जनयन्ति । कदाचित् सत्त्वं रजस्तमसी जनयति । कदाचित्तमः सत्त्वरजसी जनयति । यथा सपरिकरकुम्भकाराधिष्ठितो मृत्पिण्डो घटं जनयति तद्वज्जनयन्ति । अन्योन्यं बोधयन्तीत्येतत् प्रतिगृह्यते । यथा देवदत्तयज्ञदत्तौ परस्परं बोधयत एवं बुद्धिस्था गुणाः सत्त्वरजस्तमांसि परस्परं बोधयन्ति । एवमन्योन्यजनका गुणाः। किं चान्यत्–अन्योन्यमिथुनाश्च गुणाः । अवियोगकधर्मत्वात् । एवं ह्याहुः–

रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥

किं चान्यत्–अन्योन्यवृत्तयश्च गुणाः । अन्योन्यस्य वृत्तिं जनयन्ति । यथा काचित् स्त्री नयविनयविलासलीलावती भर्तुरात्मनो बन्धुवर्गस्य च प्रीतिं जनयति । सैव सपत्नीषु दुःखमोहौ जनयति । एवं सत्त्वेन स्त्रीभूतेन रजसस्तमसश्च वृत्तिर्जनिता । एवमन्येष्वपि योज्यम् ॥ १२ ॥

अत्राह–न खलु सत्त्वरजस्तमांसि जात्यन्तराणि । कुतः । स्वभावेष्ववस्थानात् । इह खलु रूपयौवनदाक्षिण्यमातिसाधुत्वस्मृत्युग्रभावाभावलीलाविलाससम्पन्ना स्त्री सत्त्वस्य रूपमुपादिश्यते । सा च भर्तुः सुखावहा भवति, सपत्नीनां दुःखाय रागिणां मोहाय च। तथा क्षत्रिया दुःखप्रहरणकृतापराधां दस्युसेनामभिनिघ्नती रजसो रूपमित्युपादिश्यते। तेन च दस्युभिरुपद्रुतानां दार्यमाणानां

सुखावहा भवति । दस्यूनां दुःखाय मोहाय च । तथा घनाघनो महाकृष्णो मेघस्तोयाध्मातोऽवलम्बी ग्रसमान इव नभो भूमिं चाभिवर्धमानः सबलाकः सविद्युद्गम्भीरस्तनितस्तमसो रूपमित्युपदिश्यते । स च कर्षकाणां सज्जीकृतबीजोपकरणानां सुखो भवति । स एवानाच्छादितशरणानामनुपार्जितभक्तस्नेहलवणानामप्रगुणिततृणकाष्ठानां प्रोषितवधूनां च दुःखो मूढश्च । तदेवमवस्थितस्वभावत्वादेकं सत्त्वरजस्तमांसि ।

अत्रोच्यते जात्यन्तरममूनि त्रीणि । लक्षणपृथक्त्वव्यवस्थानात् । कथमिति चेत्तदुच्यते—

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥

अत्र यत् पूर्वस्यामार्यायामभिहितं सत्त्वलक्षणं तल्लघुत्वप्रकाशकलक्षणं च । यदा सत्त्वमुत्कटं भवति देवदत्ते तदा लघून्यङ्गानि, विशुद्धानीन्द्रियाणि स्वविषयग्रहणसमर्थानि भवन्ति । तदा मन्तव्यमद्य मे सत्त्वमुत्कटत्वेन वर्तते । इष्टं च स्वरूपसाधनहेतुत्वात् । उपष्टम्भकं चलं च रजः । उपष्टम्भकं प्रेरकमुन्नाडिरित्यर्थः । यथा मत्तवृषो वृषं दृष्ट्वा उद्धतो भवति तद्वत् । अथ वा गर्वश्चला क्रियेत्यर्थः । एवं यस्मिन् देवदत्ते यज्ञदत्ते वा रज उत्कटं भवति स कलहं मृगयते । किं चान्यत् चलचित्तश्च भवति ग्रामं गच्छामि स्त्रियं कामये तपः करोमि इत्यादि । एवं नित्यमुत्सुकमना भवति । एतत् रजोलक्षणम् । तम आह—गुरु वरणकमेव तमः । यद्गुरुत्वमावरणत्वं चास्ति तत्तमः । यदा गुरूण्यङ्गानि भवन्ति । इन्द्रियाण्यलसानि स्वविषयग्रहणासमर्थानि भवन्ति । तदानीं मन्तव्य-

मेतत्तम उत्कटत्वेन वर्तत इति। तस्माज्जात्यन्तराण्येव सत्त्वरजस्तमांसि। यत्पुनरभ्यधायि—स्त्री क्षत्रिया मेघश्चेति। अत्र त्रयेऽपि ब्रूमः। सत्त्वं रजस्तमसी आश्रित्य स्वेन रूपेणाङ्गाङ्गिभावं गच्छति। तस्यापकाराद्दुःखमुत्पद्यते। एवं रजस्तमसी योज्ये। परस्परविरुद्धानां गुणानां कथमेका वृत्तिर्भवतीत्यत्राह—परस्परविरुद्धाः शत्रवो न ह्येकमर्थं कुर्वन्ति। इमे च गुणाः परस्परविरुद्धा अपि पुरुषार्थं कुर्वन्ति। कुतः। प्रदीपवच्चार्थतो वृत्तिः। प्रदीपेन तुल्यं प्रदीपवत्। अर्थतः कार्यवशात्। परस्परविरुद्धानामप्यमीषां वृत्तिर्दृष्टा। यथा तैलाग्निवर्त्तिकासंयोगात्परस्परविरुद्धा अपि पदार्थाः संहत्य एकमर्थं प्रकाशरूपं निष्पादयन्त्येवं गुणा अपि परस्परविरुद्धाः संहत्य पुरुषार्थं कुर्वन्ति॥ १३॥

अत्राह—अयमन्तरः प्रश्नो हि। यदुक्तं पूर्वस्यामार्यायां 'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि। व्यक्तम्—' तत्कथमेवं ज्ञायतेऽव्यक्तमपि त्रिगुणत्वादियुक्तम्। अत्रोच्यते—

**अविवेक्यादिः(१) सिद्धस्त्रैगुण्यात्तद्विपर्ययाभावात्।**
**कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम्॥१४॥**

योऽयमविवेक्यादिर्गुणः प्रसवधर्मान्तः स व्यक्तेऽपि सिद्धोऽव्यक्तेऽपि सिद्ध। कथं गम्यते। त्रैगुण्यात्। यत्त्रिगुणं तदविविक्तम्, यत् अविविक्तं तद्विषयं, यद्विषयं तत्सामान्यं, यत्सामान्यं तदचेतनम्, यदचेतनं तत् प्रसवधर्मि। तस्मादविवेक्यादिर्गुणस्त्रैगुण्यादेव सिद्धः। तद्विपर्ययाभावात्(२)। इह हि यत्र तन्तवस्तत्रैव पटः यत्र पटस्तत्रैव तन्तवः, यस्तन्तून्

(१) अविवेकित्वादिकम्।

(२) तस्य अविवेकित्वादेर्विपर्ययो विवेकित्वादिकम् तस्य अभावात्। एतदेव दर्शयति यत्र तन्तव इत्यादिना।

पश्यति स पटं पश्यति, यो वा पटं पश्यति स तन्तून् पश्यति। एवमेव तन्तुपटयोरिव व्यक्ताव्यक्तयोः सम्बन्धः। दूरे हि प्रधानं सन्निकृष्टे व्यक्तम् । यो हि व्यक्तं पश्यति स चाव्यक्तमपि पश्यति। यो वा योगी प्रधानं पश्यति स व्यक्तमपि पश्यति। तस्माद्विपर्ययाभावादविवेक्यादिगणेन सिद्धमव्यक्तम् । इतश्च सिद्धम् । कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् । कारणस्य गुणाः कारणगुणास्ते आत्मा स्वभावो यस्य तद्भावः कारणगुणात्मकत्वम्। आत्मशब्दः स्वभावे वर्तते। कारणगुणस्वभावत्वात् कार्यस्य । इह लोके यदात्मकं कारणं तदात्मकमेव कार्यमपि भवति। कारणानुगतत्वात् कार्यस्य । यथा कटुनिम्बवृक्षात् कटुरेव रसो भवति मधुराच्च मधुरो द्राक्षादिरसः । तस्मादविवेक्यादिगणेन सिद्धमव्यक्तम् । तत्र यदुक्तं भवता तत् कथमेवं ज्ञायते अव्यक्तमविवेक्यादिगणेन युक्तमिति तदेवमेव त्रिभिर्हेतुभिः प्रतिपादितम् । अत्राह—इह लोके यन्न विद्यते तन्नास्ति। यथा द्वितीयमनीश्वरशिरः, तृतीयः पाणिः, शशविषाणं, वन्ध्यापुत्रिकाभ्रूविलासादयो वा । नैव तावत् प्रधानपुरुषावुपलभ्येते, तौ कथं हि स्त इति गम्यते । हिमवत उपलगणपरिमाणं नोपलभ्यते । किं तन्नास्ति । एवं प्रधानपुरुषावनुपलभ्यमानावप्युपलभ्येते हेतुभिः। तांश्च हेतूनुपरिष्टाद्वक्ष्यामः ॥ १४ ॥

त उच्यन्ते—

भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥

अस्ति प्रधानम् । कुतः । भेदानां परिमाणात् । लोके यत्र कर्तास्ति तस्य परिमाणं दृष्टम् । यथा कुलालः परिमितात् मृत्पिण्डात् परिमितमेव घटं कुरुते प्रस्थग्राहकमाढकग्राहकं वा ।

एवं व्यक्तं परिमितम् । एका बुद्धिरेकोऽहङ्कारः पञ्च तन्मात्राणि एकादशेन्द्रियाणि पञ्च महाभूतानि इति त्रयोविंशतिकम् । एवमेतत् परिमितं व्यक्तं दृष्ट्वाऽनुमानेन साधयामोऽस्त्यस्य कारणं प्रधानं यद्व्यक्तं परिमितमुत्पादयति । यदि च प्रधानं कारणं न स्यान्निष्परिमाणमिदं व्यक्तं स्यात् । अस्ति चास्य परिमाणं तस्मादस्ति प्रधानम् । इतश्चास्ति समन्वयदर्शनात् । कस्य समन्वयात् भेदानामेव । अस्मादेव कारणात् शकलकपालमात्रसमस्तसमन्वयः । भूषणादीन् दृष्ट्वा तत्त्वेन दर्शयति । सामान्यप्रकरणाल्लोकभेदानामेकैकजातिसमन्वयो दृष्टः । तेषां धर्मोऽन्वयः तस्मात्समन्वयदर्शनात् पश्यामोऽस्ति प्रधानं कारणमिति । इतश्चास्ति—शक्तितः प्रवृत्तेश्च । इह यो यस्मिन्नर्थे शक्तः स तस्मिन्नेव प्रवर्तते । तद्यथा कुम्भकारो घटघटिकाशरावोदञ्चनादिकरणे शक्तः । अतः साधयामः प्रधानस्याप्यस्ति शक्तिर्यया शक्त्या व्यक्तमुत्पादयति । सा च शक्तिर्निराश्रया न भवति । तस्मादस्ति प्रधानं यत्र शक्तिरवतिष्ठते । इतश्चास्ति— कारणकार्यविभागात् । करोतीति कारणम्, क्रियत इति कार्यं तयोर्विभागस्तस्मात् । तद्यथा मृत्पिण्डः कारणं घटः कार्यम् । स एव हि मधूदकपयःप्रभृतीनां धारणे समर्थो न तु मृत्पिण्डः । एवं व्यक्ताव्यक्तयोर्विभागः । अन्यत् व्यक्तं महदहङ्कारतन्मात्रेन्द्रियमहाभूतपर्यन्तं, तच्च कार्यम् । अन्यच्च अव्यक्तं प्रधानं विपरीतं कारणमिति । तस्मादस्ति प्रधानम् । इतश्चास्ति—अविभागाद्वैश्वरूप्यस्य । न विभागोऽविभागः । विश्वरूपस्य भावो वै-

---

(१) समन्वयात्समानधर्मदर्शनात् । व्रतचारिणं बटुं दृष्ट्वा समन्वीयते नूनमस्यास्ति ब्राह्मण्यम् । एवमिदं त्रिगुणं महदादि दृष्ट्वा साधयामोऽस्य यत्कारणं भविष्यतीति ।

त्रिगुणतः प्रवर्तते त्रिधा व्यवहारः । समुदयाच्च । यथा गङ्गायां स्रोतांसि समुदितानि गङ्गामारभन्ते, यथा वा तन्तवः समुदिताः पटं कुर्वन्ति एवं सत्त्वरजस्तमांसि त्रयो गुणाः समुदिताः प्रधानस्था व्यक्तं कुर्वन्ति । अत्राह—इह लोके द्विविधं कारणं परिणामकत्वादपरिणामकत्वाच्च । तत्रापरिणामकत्वात् मृत्पिण्डदण्डसूत्रोदकाविदलान् पश्यामः । परिणामतश्च क्षीरं दधीति । तत्र प्रधानं कथं कारणमित्यत्रोच्यते—परिणामतः । यथा क्षीरं दधिभावेन परिणमति, यदेव क्षीरं तदेव दधि, एवं प्रधानं व्यक्तभावेन परिणमति । दधिवत् व्यक्तं क्षीरवत् प्रधानमित्यर्थः । यदेवाव्यक्तं तदेव व्यक्तमिति । तस्मादुच्यते परिणामतः प्रधानं कारणमिति । अत्राह को दृष्टान्तः? तदुच्यते—सलिलवत् । यथा सलिलमेकं हिमवत् हिमभावेन परिणमति, यथा च इक्षुरसो रसिकाषण्डमत्सरिकाशर्कराफाणितगुडभावेन परिणमति । यथा वा क्षीरं द्रप्स्यदधिमस्तुनवनीतघृतारिष्टकिलाटकूर्चिकादिभावेन परिणमति । एवमेवाव्यक्तम् आध्यात्मिकेन बुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतभावेन परिणमति, आधिदैविकेन शीतोष्णवातवर्षादिभावेन परिणमति । अत्राह—एकस्मात्प्रधानात् उत्पन्नास्त्रयो लोकाः कथं विषमाः । इह ये देवास्ते सुखिनो मनुष्यास्ते दुःखिनस्तिर्यञ्चो मूढाः । एकस्मात्प्रधानादुत्पन्नानां त्रयाणां लोकानां कथं वैषम्यं मूढत्वादिनेत्यत्रोच्यते—प्रतिप्रतिगुणाश्रयविशेषात् । तद्यथा एकरसमन्तरिक्षात् जलं पतितम् । तच्च मेदिनीं प्राप्य नानारसतां याति । पृथग्भाजनविशेषात् । एवमिमे त्रयो लोका एकस्मादपि प्रधानादुत्पन्ना गुण-

( १ ) प्रतिप्रतीति वीप्सा गुणानामाश्रयस्तस्य विशेषस्तं गुणाश्रयविशेषं प्रतिनिधाय अङ्गीकृत्य गुणाश्रयविशेषं परिणामात्प्रवर्तते ।

वैषम्यात् पृथग्भावं गताः। यथा देवेषु सत्त्वमुत्कटं ततस्ते सुखिनः, तत्रापि रजस्तमसी गौणतया स्तः। मनुष्येषु रज उत्कटं ततस्ते दुःखिताः, तेष्वपि सत्त्वतमसी स्तः। तिर्यग्योनिगतेषु तम उत्कटं ततस्ते मूढाः। तेष्वपि सत्त्वरजसी स्तः। एवमेकस्मादुत्पन्नानां त्रयाणां लोकानां वैषम्यं भवति ॥ १६ ॥

एवं द्वाभ्यामार्याभ्यां प्रधानस्याधिगमः कृतः। अत ऊर्ध्वं पुरुषस्याधिगमं करिष्यामः। अत्राह—केचिदाचार्या इति मन्यन्ते शरीरेन्द्रियबुद्ध्यादिव्यतिरिक्तो नास्ति परमात्मा। आहुश्च—

एतावानेव पुरुषो यावदिन्द्रियगोचरः। इति।

अत्रोच्यते—शरीरेन्द्रियबुद्ध्यादिव्यतिरिक्त आत्मा अस्तीति। को दृष्टान्तः? यथा असिकोशवत्। मुञ्जेषीकावत्। उक्तं च—

मशकोदुम्बरेषीकामुञ्जमत्स्याम्भसां यथा।
एकत्वेऽपि पृथग्भावस्तथा क्षेत्रात्मनोर्नृप ॥

एवं शरीरेन्द्रियबुद्ध्यादिभिः क्षीरनीरवदेकीभूतोऽपि तद्व्यतिरिक्तोऽस्ति परमात्मा पुरुषोऽपि। प्रधानवत् सूक्ष्मत्वान्नोपलभ्यत इति तदधिगमाय हेतुरभिधीयते—

**सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च ॥ १७ ॥**

अस्ति पुरुषः। सङ्घातपरार्थत्वात्। यतः सङ्घातश्च परार्थः। तस्मात् हेतोः। इह लोके ये सङ्घातास्ते परार्था दृष्टाः पर्यङ्करथशरणादयः। एवं गात्राणां महदादीनां सङ्घातः समुदायः परार्थ एव। (तस्मादस्ति नूनमन्योन्याधिष्ठितो यदर्थोऽयं सङ्घात इति सङ्गतिः।) पर्यङ्करथादयः काष्ठसङ्घाताः। गृहादयः काष्ठेष्टकादिसङ्घाताः। न हि ते रथगृहपर्यङ्कादयः किमपि स्वा-

र्थं साधयन्ति । न वा परस्परार्थाः । किं तु अस्ति असौ देवदत्तादिर्योऽस्मिन् पर्यङ्के शेते रथेन गच्छति गृहे निवसतीति । (चेतसः प्रतीत्या) । एवममी महदादयश्चक्षुरादयो न स्वार्था न च परस्परार्थाः, किं तु परार्थाः । यश्चासौ परः स चात्मा । तस्मादनुमीमहे अस्ति पुरुषः, यस्यार्थे चक्षुरादिसङ्घातः शरीरमुत्पन्नमिति । इतश्चास्ति—त्रिगुणादिविपर्ययात् । त्रयो गुणा यस्य गणस्यादौ सम्भवन्ति स त्रिगुणादिः । त्रिगुणादेर्विपर्ययः । तस्मात्पश्यामोऽस्ति पुरुष इति । उक्तं पूर्वस्यामार्यायाम् त्रिगुणमविवेकीत्यादि व्यक्तप्रधानसाधर्म्यम् । 'तद्विपरीतस्तथा च पुमान्' इति । अगुणविवेक्यविषयासामान्यचेतनाप्रसवधर्मादिविपर्ययादात्मनोऽस्तित्वं पृथक्त्वं च सिद्धम् । अतश्चास्ति । अधिष्ठानात् । न ह्यन्तरेणाधिष्ठातारं भवति वस्तुजातम् । तद्यथेह लोके लङ्घनप्लवनधावनसमर्थैरश्वैर्युक्तो रथः सारथिनाधिष्ठितः प्रवर्तते । अथ सारथिनानधिष्ठितः प्रवर्तते ततः शरीरनाशः स्यात् । न चात्मविनाशाय प्रवर्तते । अपि चोक्तं षष्टितन्त्रे—'पुरुषाधिष्ठितं प्रधानं प्रवर्तते' इति । ततः पश्यामोऽसौ परमात्मा अस्ति पुरुषो येनाधिष्ठितं प्रधानं महदहङ्कारतन्मात्रेन्द्रियभूतान्युत्पादयति । तस्मादस्ति पुरुष इति । इतश्चास्ति—भोक्तृभावात् । इह मधुराम्लतिक्तलवणकटुकषायाः षट् रसाः । एतैः षड्भी रसैर्युक्तं भोजनं दृष्ट्वा भोक्ता साध्यते । अस्ति भोक्ता यस्येदं भोजनम् । एवमिदं व्यक्ताव्यक्तं दृष्ट्वा साधयामोऽस्त्यसौ परमात्मा पुरुषो यस्येदं भोक्तुर्व्यक्ताव्यक्तं भोग्यमिति । इतश्चास्ति—कैवल्यार्थप्रवृत्तेश्च । केवलभावः कैवल्यं मोक्ष इत्यर्थः । या तस्य प्रधानस्य प्रवृत्तिः सा कैवल्यार्था प्रवृत्तिः प्रधानस्येति ॥ १७ ॥

अत्राह—गृह्णीमस्तावदेभिः पञ्चभिरधीतैर्हेतुभिः शरीरव्यतिरिक्तोऽसौ पुरुषोऽस्तीति। स किं सर्वशरीरेष्वेकः पुरुष आहोस्वित् प्रतिशरीर भिन्नः पुरुष इति। कुतः संशय इति चेच्चोदक आचार्यविप्रतिपत्तेः संशयः। इह केचिदाचार्या वेदवादिन इति मन्यन्ते—एकोऽयं पुरुषः सर्वशरीरेषूपलभ्यते मणिसूत्रवत्। इह रसनायां यावन्तो मणयस्तेषु सर्वेष्वेकमेव सूत्रं प्रवर्तते। एवं मणिभूतेषु शरीरेषु किमेकः सूत्रभूतः परमात्मा। आहोस्वित् जलचन्द्रवत् पुरुष इति एक एव बहुषु नदीकूपतडागादिष्विवोपलभ्यते इति। अतः संशयः किमेकः पुरुषो गुणसूत्रन्यायेन आहोस्वित् बहवः पुरुषाः। अत्रोच्यते—बहवः पुरुषाः कथमिति चेत्तदुच्यते—

जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥

जन्ममरणकरणानामिति। जन्मानियमात् इह केचिन्नीचजन्मानः, केचिन्मध्यमजन्मानः, केचिदुत्कृष्टजन्मानः। यदि पुनरेकः पुरुषः स्यात्स एव नीचकुलोत्पन्नः स्यात् स एव उत्कृष्टकुलोत्पन्नः स्यात्। कस्मात्? पुरुषैकत्वात्। अस्ति चायं नियमः, अन्ये अधमा अन्ये उत्कृष्टाः। तस्माद्बहवः पुरुषाः। अतश्च—मरणनियमात्। मरणेऽपि नियमो दृष्टो मम भ्राता मृतो मम पिता च। तस्माद्बहवः पुरुषाः। अपरे पुनरित्थङ्कारं वर्णयन्ति—जन्ममरणानियमात्। इह कश्चित्कदाचिन्म्रियते तदैव परो जायते। यद्येकः पुरुषः स्यात् तर्हि एकस्मिन् जायमाने सर्वेऽपि जायेरन्। न चैवम्। म्रियमाणे सर्वे म्रियेरन्। न चैवम्। तस्माद्बहवः पुरुषाः। इतश्च पश्यामः। करणानियमात्। करणानीन्द्रियाणि श्रोत्रादी-

नि । इह लोके केचिद्बधिरान्धमूकादयः । इतरे च पटुतरकरणाः । अतः पश्यामो ये उपहतेन्द्रियास्ते अन्ये, ये चानुपहतेन्द्रियास्ते चान्ये । तस्मात्प्रतिनियतकरणत्वादपि पश्यामोऽनेके पुरुषा इति । (१)इतश्च पश्यामः। त्रैगुण्यविपर्ययाच्चैव। चः समुच्चये । पूर्वोक्तैर्हेतुभिः । अस्माच्च हेतोरित्यर्थः । इहैकस्य ब्राह्मणस्य त्रयः पुत्राः सब्रह्मचारिण एकेनैव एकस्यां भार्यायां जाताः । तत्रैकः सात्त्विको मेधावी शुचिः सुखी । द्वितीयो राजसो दुर्मेधावी दुःखी । तृतीयस्तामसो मूढो नास्तिकः । यद्येक आत्मा स्यादेकस्मिन् सात्त्विके राजसे तामसे वा सर्वे तथा स्युः । न तथा भवन्ति । अतः पश्यामोऽनेके पुरुषाः ॥ १८ ॥

अत्राह—अयं संशयः । किं खलु कर्त्ता पुरुषोऽस्त्याहोस्विदकर्तेति । कुतः संशय इति चेत्, आचार्यविप्रतिपत्तेः । लोके तावत् पुरुषो गच्छति धावति तिष्ठति शोचति, पुरुषेणेदं कृतमिति विप्रतिपत्तिः । एवमाचार्या वेदवादिनो ब्रुवते । वैशेषिका अपि कर्ता इति मतं प्रतिपन्नाः । अतः संशयः । अत्रोच्यते—अकर्ता पुरुषः । कथमिति चेत्तदुच्यते—

(२)तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥

तस्माच्च विपर्यासादिति । (३)कर्तृकारणानां को

---

(१) अत्र 'अयुगपत्प्रवृत्तेश्च' इत्यस्य व्याख्यानग्रन्थस्त्रुटितो भाति ।

(२) पूर्वोक्तत्रिगुणाविपर्ययात् वैपरीत्यात् त्रैगुण्यस्य । निर्गुणः पुरुषो विवेकीति विपर्यय उक्तः, तस्मात्सत्त्वरजस्तमःसु कर्तृभूतेषु साक्षित्वं सिद्धं पुरुषस्य, गुणा एव प्रवर्तन्ते कर्तारः । साक्षी न प्रवर्तते नापि निवर्तते ।

(३) अत्रापि ग्रन्थस्त्रुटितो भाति ।

विशेषः अत्रोच्यते । तद्यथा कश्चिद्यमनियमरतः साङ्ख्ययोगाचार्यरतो भिक्षुर्नगरे प्रतिवसति । स च जनादिषु प्रतिवर्णाश्रमविहितासु क्रियासु प्रवर्तमानानां तन्नगरवासिनां साक्षिमात्रो भवति । ऋतुवशात् शीतोष्णादीनायातानानुभवति । तद्वदयं नानावस्थे गुणविमर्दे वर्तमानो वैधर्म्यात् क्षेत्रज्ञः साक्षिमात्रः स्यात् । एवं साक्षित्वं सिद्धमस्य पुरुषस्य । केवलभावः कैवल्यं नाम त्रिभ्यो गुणेभ्योऽन्यत्वम् । यथाऽसौ भिक्षुः कदाचिन्नागराणां विवदतां(१) वक्ता भवति त्वया साधुकृतमिति त्वयाऽसाध्विति । किमेवं पुरुषो भवति । अत्रोच्यते-माध्यस्थ्यम् । नास्य केन चित्कृत्यमस्ति । उदासीनो ह्ययम् । (२)अत्राह—यद्यकर्त्ता तत्किं परकृतानां प्रयोक्ता । अत्रोच्यते—कर्तृभावश्च द्विविधो हि, प्रयोक्ता कर्ता च । अत्रोदासीनस्य पुरुषस्य कर्तृत्वं प्रतिषिद्धं गुणलक्षणेन ॥ १९ ॥

अत्राह—यद्यकर्ता पुरुषः, अध्यवसायं तर्हि किं करोति धर्मं करिष्याम्यधर्मं चेति । यदि गुणा अध्यवसायं कुर्वन्ति तर्हि तेषां सचेतनत्वं स्यात् । अमीषां चाचेतनत्वमेव प्रागुपन्यस्तम् । अथ पुरुषोऽध्यवसायं कुरुते तदा तस्य कर्तृत्वप्रसङ्गः । तस्मादुभयथापि दोष इति । अत्र समाधीयते नायं दोषः । कथमिति चेत्, तदुच्यते—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ २० ॥

यस्माच्चेतनस्वभावः पुरुषः तस्मात् तत्संयोगादचेतनं महदादि लिङ्गम् अध्यवसायाभिमानसङ्कल्पालोचनादिषु वृत्तिषु

---

(१) आर्षोऽयं प्रयोगः ।
(२) अत्र 'अत एव द्रष्टा अत एव अकर्ता' इत्यपेक्षितः ।

चेतनावत् प्रवर्तते । को दृष्टान्तः—तद्यथा—अनुष्णाशीतो घटः शीताभिरद्भिः संस्पृष्टः शीतो भवति । अग्निना संयुक्त उष्णो भवति । एवं महदादि लिङ्गमचेतनमपि भूत्वा चेतनावद्भवति । तस्मादध्यवसायं कुर्वन्ति गुणाः कार्यादिषु । यदप्युक्तम्—लोकोपचारात् कर्ता पुरुष इति । अत्र ब्रूमः—गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः । अत्र दृष्टान्तश्च । केचित्किल चौरा ग्रामं हत्वा द्रव्यं गृहीत्वा ग्रामान्तरं गच्छन्ति कृतकार्याः । तैः सह सार्थेन श्रोत्रियो ब्राह्मण पन्थानं गच्छति । तत्पदानुसारिभिरारक्षिभिस्ते गृहीताः । कृतापराधैस्तैः सह सोऽपि ब्राह्मणो गृहीतस्त्वमपि चोर इति । तद्यथाऽसावचोरस्तत्संसर्गदोषेण चौरतया प्रतीतस्तैः । तथा सत्त्वादयो गुणाः कर्तारस्तैः संयुक्तः पुरुषोऽपि अकर्त्ताऽपि कर्ता भवति । कर्तृसंसर्गात् कर्तेव । परं परमार्थतया अकर्ता पुरुषः ॥ १० ॥

अत्राह—तस्मात्तत्संयोगात् इति प्रधानपुरुषसंयोग इति चेत्, संयोगः कः । अनेकविधो हि संयोगः । अन्यतरकर्मजो यथा स्थाणुश्येनयोः, (१)सम्पातजो द्वयोर्वा संयोगो यथा व्यङ्गुलाकाशयोः, स्वाभाविको यथाग्न्युष्णयोः, शक्तिहेतुको यथा मत्स्योदकयोः, याद्दच्छिकः सुपर्णयोर्वाऽऽकस्मिकः । अतः संशय. । अत्रोच्यते—अन्यतरकर्मजसंयोगश्च(२) संयोगो नैव प्रधानपुरुषयोः विभुत्वात् निष्क्रियत्वात् । नास्ति स्वाभाविकोऽपि । तयोर्नित्यत्वात् मोक्षाभाव. स्यात् अवियोगत्वात् । एवमेव विषयहेतुकशक्तिहेतुकत्वे च । अत्राह—कस्तर्हि प्रधानपुरुषयोः संयोग इति । अत्रोच्यते । अर्थहेतुकः । कश्चासावर्थ इत्यत्राह—

(१) अत्र 'उभयकर्मज' इत्यधिक अपेक्षितः । अग्रे च 'द्व्यङ्गुलाकाशयोः' इत्यत्र द्वयोरङ्गुल्योरिति पाठः समीचीनः ।

(२) अन्यतरकर्मज उभयकर्मजश्च संयोग इति पाठ. समीचीनः ।

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥**

पुरुषस्य तावद्दर्शनार्थं संयोगः । पुरुषः प्रधानेन सह संयुज्यते त्रिगुणां प्रकृतिं द्रक्ष्याम्ययमर्थः । **कैवल्यार्थं तथा प्रधानस्य** संयोगः । अस्य तपस्विनः पुरुषस्य ज्ञाने वर्तमानस्य कैवल्यं करिष्यामीति । कैवल्यं मोक्ष इत्यर्थः । यथा राजा पुरुषेण संयुज्यते प्रेषणं मे करिष्यतीति । पुरुषोऽपि राज्ञा संयुज्यते वृत्तिं मे दास्यतीति । एवं तावद्राजपुरुषयोरर्थहेतुकः सम्बन्धः । तथा प्रधानपुरुषयोरप्यर्थहेतुकः सम्बन्धः संयोगः । किंचान्यत् । **पङ्ग्वन्धवदुभयोरपि संयोग** इति । अपि चात्र दृष्टान्तः । यथा किल कश्चिदन्धः सार्थेन समं पाटलिपुत्रं प्रस्थितः स च सार्थश्चौरैरभिहतः । अन्धोऽपि अवशेषजीवितः कृच्छ्रेण महता निर्जगाम । स च सर्वस्वजनविरहित इतश्चेतश्च परिभ्राम्यन् पन्थानमपश्यन् समन्ताच्चङ्क्रममाणः केनचिद्वनमध्यस्थेन पङ्गुना दृष्टः प्रोक्तश्च । भोभो अन्ध मा भैषीरहं पङ्गुर्मार्गदर्शने कुशलो गन्तुमसमर्थः । अन्धेन प्रतिवचनं प्रोक्तम्—भो पङ्गो यथा भवान् गमनाशक्तस्तथाऽहमपि न शक्नोमि द्रष्टुं, गन्तुं मम सामर्थ्यमस्ति । तव दर्शनसामर्थ्येनाहं भवन्तं स्कन्धेनादाय गच्छाम्येवमुभयोर्दुःखपरिहारलक्षणा कार्यसिद्धिरस्तु । एवं तयोर्यथा स्वार्थलब्धिहेतुकः सम्बन्धः संयोगस्तुल्यः । तद्वत् । पङ्ग्वन्धवत् प्रधानपुरुषौ द्रष्टव्यौ । पङ्गुवत् पुरुषो द्रष्टव्यः । अन्धवत् प्रधानम् । पुरुषस्य दृक्शक्तिः । प्रधानस्य क्रियासामर्थ्यम् । *एवं प्रधानमपि पुरु-

---

* अत्र 'यथा चानयोः पङ्ग्वन्धयोर्विभागो भविष्यतीप्सितस्थानप्राप्तयोः' इत्यधिकः पाठोऽपेक्षितः ।

पस्य मोक्षं कृत्वा निवर्तते । पुरुषः प्रधानं दृष्ट्वा मोक्षं गच्छति । किं चान्यत्– तत्कृतः सर्गः । तच्छब्देन प्रधानपुरुषौ सम्बध्येते । ताभ्यां प्रधानपुरुषाभ्यां कृतस्तत्कृतः सर्गः । तद्यथा–स्त्रीपुरुषसंयोगात् पुत्रः सम्भवति । एवं प्रधानपुरुषसंयोगात्सर्गोत्पत्तिर्भवति । सर्गशब्देन महदादिलिङ्गोत्पत्तिरिति ब्रुवते ॥२१॥

तामुत्पत्तिं ब्रूमः–

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥२२॥

प्रकृतिः प्रधानमधिकुरुते । ब्रह्म अव्यक्तं बहुधात्मक मायेति पर्यायाः । तस्याः प्रकृतेर्महानुत्पद्यते प्रथमः कश्चित् । महान्, बुद्धिः, मतिः, प्रज्ञा, संवित्ति, ख्यातिः, चिति, स्मृतिरासुरी हरिः, हरः, हिरण्यगर्भ इति पर्यायाः । ततोऽहङ्कारः । तस्मान्महतोऽहङ्कार उत्पद्यते । तस्य इमे पर्याया–वैकृतस्तैजसो भूतादिरभिमानोऽस्मिता इति । चतुःषष्टिवर्णैः(१) परादिवैखरीपर्यन्ताभिधेयैर्यत्किमप्यभिधीयते बुद्धया समर्थ्य तत्सकलमाद्यन्ताकारहकारवर्णद्वयग्रहणेनोपरिस्थितपिण्डीकृतानुकारिणा बिन्दुना भूषितः प्रत्याहारन्यायेनाहङ्कार इत्यभिधीयते । तस्मात् अहङ्कारात् षोडशको गण उत्पद्यते । तामसात् भूतादिनाम्नः पञ्चतन्मात्राणि शब्दादीनि । अत एव तानि मूढानि । सात्त्विकात् वैकृताभिधानात् बुद्धिकर्मात्मकानि मनःसहितानि एकादशेन्द्रियाणि ।

(१) स्वरा एकविंशतिः । ह्रस्वदीर्घप्लुतप्रयोगेण अ–इ–उवर्णास्त्रिविधा नव, ऋवर्णः प्लुतहीनो द्विविधः, लृकारोऽपि द्विविध एव दीर्घहीनः, सन्ध्यक्षराणि ए ऐ इत्यादीनि एवमेवाष्टौ, एवमेकविंशतिः स्वराः । स्पर्शाः पञ्चविंशति । यादयो हान्ता अष्टौ अन्तस्था ऊष्माणश्चेति । अनुनासिकाः पञ्च । अनुस्वारविसर्जनीयजिह्वामूलीयोपध्मानीयाः । एव त्रिषष्टिर्वैखरी चतुःषष्टिर्सुखनः ।

अत एव तानि किं चित् जानन्ति । राजसात् तैजसाभिधानादुभयम्(१) । मूढत्वाद्धि तमः । प्रकाशत्वात् सत्त्वम् । उभयगुणयोगात् षोडशको गणः अहङ्कारादुत्पद्यते । तस्मादपि षोडशकात् मध्ये यानि पञ्च शब्दादितन्मात्राणि तेभ्यः पञ्च भूतानि आकाशादीनि । तत्र शब्दतन्मात्रादाकाशं, स्पर्शतन्मात्रात् वायुः,(२) रूपतन्मात्रात्तेजः, रसतन्मात्रादापः, गन्धतन्मात्रात्पृथिवी इत्यादिक्रमेण पूर्वपूर्वानुप्रवेशेनैकद्वित्रिचतुष्पञ्चगुणानि आकाशादिपृथ्वीपर्यन्तानि महाभूतानीति सृष्टिक्रमः(३) । अत एव भूतानामुत्पत्तिप्रलयावबोधनात् भ इति । आगतिगतिपरिज्ञानात् ग इति । विद्यायोगी इति व । अनति चलतीति अन् । सकलवर्णसम्प्रदायात् भगवानित्यभिमानसिद्धिः । 'अप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न संस्कारमाद्रियेत' इति नैरुक्तश्रुतिप्रामाण्यात् । उक्तं च–

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

श्रीविष्णुपुराणे षष्ठेंऽशे पराशरवचः । यदुक्तम्–व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षः प्राप्यत इति । तत्र महदादिभूतपर्यन्तमित्येतत् व्यक्तं व्याख्यातम् । अव्यक्तमपि 'भेदानां परिमाणात्' इत्या-

---

(१) एकादशेन्द्रियाणि तन्मात्राणि च ।

(२) अत्र 'शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः, शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्रात्पृथिवी' इति पाठ उचितः ।

(३) भगवता कपिलेनोक्त इत्यधिकः पाठोऽत्रापेक्षित उत्तरग्रन्थस्वारस्येन ।

दिभिः पञ्चभिर्हेतुभिर्व्याख्यातम् । (१)यदुक्तम्-

पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।
जटी मुण्डी शिखी वाऽपि मुच्यते नात्र संशयः ॥ २२ ॥

अत्राह-प्रकृतेर्महानित्युक्तम् । तस्य महतः किं लक्षणमित्यत्रोच्यते—

**अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।**
**सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥**

अध्यवसायो बुद्धिरिति । अध्यवसायो निश्चयः प्रतिपत्तिः अयं स्थाणुरयं पुरुष इति बुद्धेर्लक्षणम् । सा च बुद्धिरष्टाङ्गा । सात्त्विकतामसरूपभेदात् । तत्र बुद्धेः सात्त्विकं रूपं चतुर्विधं भवति धर्मो ज्ञानं वैराग्यमैश्वर्यमिति । तत्र धर्मो नाम वर्णिनामाश्रमिणां च समयाविरोधेन यः प्रोक्तो यमनियमलक्षणः स धर्मः । तत्र पञ्च यमाः पञ्च नियमाः । अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहा यमाः । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । एभिर्यमनियमैर्यः साध्यते स धर्मः ।

धारणार्थो धृञित्येष धातुः शब्दैः प्रकीर्तितः ।
दुर्गतिप्रपतत्प्राणिधारणात् धर्म उच्यते ॥

तत्र या स्थावरजङ्गमानां भूतानां वाङ्मनःकायकर्मभिरद्रोहता सा अहिंसा । तथा यत् भूतहितमत्यन्तं दृष्टश्रुतानुमितिविज्ञातेष्वर्थेषु यथाऽन्तःकरणप्रत्ययोपस्थितं तथैव इन्द्रियाणि

---

(१) 'पुरुषोऽपि सङ्घातपरार्थत्वादिभिर्हेतुभिर्व्याख्यातः । एवमेतानि पञ्चविंशतितत्त्वानि यस्त्रैलोक्यं व्याप्तं जानाति स मुच्यते' इत्यधिकमत्रापेक्षितम् ।

अविलुप्य वञ्चनाभ्रान्तिप्रतिपत्तिवन्ध्यताविरहितवागुच्चारणं तत् सत्यम्। तथा यत्सम्भ्रमेष्वन्येषु वात्यान्तिकेषु प्रयोजनेषु स्वे स्वे स्थाने समत्वात् ग्रहणस्योपरमः तदस्तेयम्। तथा स्त्रीपुरुषसंयोगे परस्परलिङ्गसंयोगे शब्दस्पर्शरसरूपगन्धेषु यः सङ्गव्युदासः श्रोत्राद्युपरतिः असङ्कल्पश्च मनस उपरतिः स अष्टाङ्गं ब्रह्मचर्यम्। एवं ह्याहुः संयोगशब्दस्पर्शरसरूपगन्धसङ्कल्पस्मृतिधर्मफलत्यागाद्यष्टाङ्गं ब्रह्मचर्यमिति। अन्यच्च। ब्रह्म वीजं रेतस्तच्चरति न मुञ्चतीति ब्रह्मचारी। ब्रह्म वेदं वा गुरुणा प्रदत्तं चरतीति। ब्रह्मा स्वयम्भूस्तस्यायं दण्डकमण्डलुधारणादिरूप आकारो ब्रह्मवच्चरतीति वा। एवमर्जनक्रयविक्रयादिकल्पनाभेदानामनुपादानं सर्वथा सर्वस्यास्वीकरणमपरिग्रहः। इति पञ्च यमाः। (१)यश्चेन्द्रियाणामन्तःकरणोपरमस्तच्छौचं बाह्यं मृज्जलादिना।

अभक्ष्यपरिहारस्तु संसर्गश्चाप्यनिन्दितैः।
स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम्॥

तथा यद्भैक्षार्जितेन हविषा प्राणयात्रा। आध्यात्मिकस्याग्नेर्मन्त्रगृहीतेन होमः कर्तव्यः। अहन्यहनि यज्ञशेष अशनार्थमेतदाहारलाघवं सन्तोषः। "स यां प्रथमामाहुतिं जुहुयात् प्राणाय स्वाहा" (छां० उ० अ० ५। खं० १९।) इत्यारभ्य "स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि हुतं तादृक् तत्स्यात्" (छां० उ० अ० ५। खं० २४।) इति श्रुतेः। तपः कृच्छ्रचान्द्रायणादि शरीरशोषणरूपम्।

विषया विनिवर्तन्ते निराहारस्य देहिनः।

इति स्मरणात्। नातपस्विनो योगः सिध्यति। अनादिवा-

(१) अत्र किञ्चित् त्रुटितं भाति।

सनाविचित्रा मत्युपस्थितविषयजाला चाशुद्धिर्नान्तरेण तपः सम्भेदमापद्यत इति तपस उपादानम् । तच्च चित्तप्रसादनमबाध्यमानमासेव्यमिति मन्यन्ते । स्वाध्याय. प्रणवादिपवित्राणां जपः । ईश्वरप्रणिधानं क्रियाणां परमगुरावर्पणं तत्फलसंन्यासो वा । "ब्रह्मार्पणं ब्रह्महविः" इति । "अनाश्रितः कर्मफलम्" इति श्रवणात् । इत्यमीषां यमनियमादीनां सेवनात् 'अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्याग' ( पा० यो० पा० २ । सू० ३५ ) इत्याद्याः सिद्धयः । वैपरीत्ये तु 'वितर्कबाधने प्रतिपक्षभावनम्' । ( पा० यो० पा० २ । सू० ३३ । ) 'वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्' । ( पा० यो० पा० २ । सू० ३४ ) एवं च वर्तमानस्य योगिनः 'स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्' । ( पा० यो० पा० ३ । सू० ५१ । ) इति भिक्षोरेते यमनियमाः । एभिर्यमनियमैर्वा साध्यते स धर्मो व्याख्यातः । अधुना ज्ञानमाह—ज्ञानं द्विविधम् । बाह्यमाभ्यन्तरं च । तत्र बाह्यम्—वीणापणवगन्धर्वचित्रकथागणितव्याकरणशास्त्राणि । आभ्यन्तरम्-गुणपुरुषान्तरोपलब्धिलक्षणम् । अन्ये गुणाः सत्त्वरजस्तमांसि अन्यः पुरुष इति । बाह्येन ज्ञानेन लोकोपपत्तिराभ्यन्तरेण मोक्ष इति । एतत् ज्ञानं विषयोपरमात् । वैराग्यमाह—(१)अर्जनरक्षणक्षयातृप्तिहिंसादिदोषान् दृष्ट्वा यो विषयेभ्यो विरक्तस्तस्य मोक्षो नास्तीति । आभ्यन्तरेण ज्ञानपूर्वकेण वैराग्येण मोक्षो भवति बाह्येन संसार इति । ऐश्वर्यं ईश्वरभावेने-

---

( १ ) अत्र 'वैराग्यमपि द्विविधम् । आभ्यन्तरं बाह्यं च । आभ्यन्तर प्रधानमप्यत्र स्वप्नेन्द्रजालसदृशमिति विरक्तस्य मोक्षप्सोर्यदुत्पद्यते तत्' इत्यधिकमपेक्षितम् ।

त्यष्टविधम् । अणिमा लघिमा गरिमा महिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्रकामावसायित्वमिति(१) । एतानि धर्मादीनि चत्वारि सात्त्विकरूपाणि बुद्धेः । यदा सत्त्वेन रजस्तमसी अभिभूते स्तस्तदा सत्त्वोद्रिक्तः पुमानेतान् गुणानाप्नोति । किं चान्यत् । तामसमस्मात् विपर्यस्तम् । अस्मात् सात्त्विकाद्धर्मादेः विपर्यस्तं विपरीतम् अधर्माज्ञानाद्यं चतुर्धा बुद्धे रूपं तामसम् । ये हिंसादयो वितर्का एकाशीतिभेदाः । पृथक् दशापि यमनियमाद्याः(२) । तथा अधर्मोऽज्ञानमवैराग्यमनैश्वर्यमित्यष्टधा सात्त्विकतामसभेदा बुद्धिः । अस्या एवं विधाया बुद्धेरहङ्कारो जायते ॥ २३ ॥

इदानीमहङ्कारस्य लक्षणं व्याख्यास्यामः । तदुच्यते—

**अभिमानोऽहङ्कारस्तस्माद्द्विविधः प्रवर्तते सर्गः ।**
**ऐन्द्रिय एकादशकस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥**

अभिमानोऽहङ्कार इति । रूपे(३) अहम् रसे अहम् गन्धे अहम्, अहं विद्वान्, अहं दर्शनीय इत्येवमाद्यभिमानोऽहङ्कारः । तस्मात् अभिमानलक्षणादहङ्कारात् द्विविधः प्रवर्तते सर्गः । सर्ग इति सृष्टेः पर्यायः । कश्चासौ सर्गः ? तदुच्यते । ऐन्द्रिय एकादशकः । श्रोत्रादीनीन्द्रियाणि मनःपर्यन्तानि । तन्मात्रपञ्चकश्चैव । तन्मात्राण्यत्र शब्दादीनि गन्धपर्यन्तानि । एवमेकादशेन्द्रियाणि पञ्चतन्मात्राणि चोत्पन्नानि ॥ २४ ॥

---

(१) यत्रकामावसायित्वशब्दस्तान्त्रिकया परिभाषया सत्यसङ्कल्पत्वार्थः । यत् यदर्थत्वेन सङ्कल्पयति तत् तस्मै प्रयोजनाय कल्पते विषमप्यमृतकार्ये सङ्कल्प्य भोजयन् जीवयति न मारयतीत्यर्थः ।

(२) अत्र त्रुटितं भाति ।

(३) अत्र रूपयामि रसयामि जिघ्रामि इति प्रयोगाः साधवः ।

अत्राह—त्रिविधोऽहङ्कारस्तं व्याख्यास्यामः। तत्र कतरस्मादहङ्कारात् इन्द्रियाणि उत्पद्यन्ते, कतरस्माद्वा तन्मात्राणीति। अत्रोच्यते—

**सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।**
**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्॥ २५॥**

सात्त्विक इति। यदा सत्त्वमुत्कटं भवति अहङ्कारे तेन च सत्त्वेन रजस्तमसी अभिभूते स्यातां तदा सात्त्विकोऽहङ्कार उच्यते। तस्य सात्त्विकस्य वैकृतिक इति पूर्वाचार्यैः संज्ञा कृता। स वैकृतिको भूत्वा अहङ्कार एकादशेन्द्रियाणि उत्पादयति। तस्मात्सात्त्विकानीमानि विशुद्धानि स्वविषयग्रहणसमर्थानि भवन्ति। तस्मादुच्यते-'सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्' इति। भूतादेस्तन्मात्रः। भूतादेः तमोबाहुल्यात् गौणीभूतसत्त्वरजसो भूतादिनाम्नः पूर्वाचार्यैर्निरूपितादहङ्कारात् तन्मात्रः शब्दादिपञ्चको गणो जायते। अभिभूतसत्त्वतमसो राजसात् तैजसाभिधानादहङ्कारात् प्रवृत्तिकर्मण उभयं प्रकाशात्मकमेकादशेन्द्रियकं मोहात्मकं तान्मात्रिकं चासीदिति सम्बन्धः। तैजस एव राजसेऽहङ्कारे क्रियाशक्तिरस्ति। सत्त्वं निष्क्रियमेकाकि न शक्नोति उत्पादयितुम्। तमश्च मूढत्वादक्रियमसमर्थं विना रजः सृष्टिमुत्पादयितुम्। अत उभे सत्त्वतमसी सृष्टिविषये रजसाऽनुगृहीते ऐन्द्रियकं तान्मात्रिकं च गणद्वयं जनयत इति तात्पर्यार्थः॥ २५॥

तत्र कानि बुद्धीन्द्रियाणि कानि कर्मेन्द्रियाणीति? उच्यते—

**बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षूरसननासिकाख्यानि।**
**वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः॥ २६॥**

श्रोत्रादीनि बुद्धीन्द्रियाणीति उच्यन्ते । शब्दस्पर्शरूपरसगन्धान् बुध्यन्त इति बुद्धीन्द्रियाणि । इन्द्राण्येव तानीन्द्रियाणि । इन् इति विषयाणा नाम, तानिनः विषयान् प्रति द्रवन्तीति इन्द्रियाणि । वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः । कर्म कुर्वन्ति कारयन्ति च । कर्मेन्द्रियाणां वृत्तिः । वाक् वदतिकर्म, हस्तौ ग्रहणकर्माणौ, पादौ विषमसमनिम्नोन्नतभूप्रदेशेषु क्रामतः, पायुर्यथाभुक्तान्नोदकमलमुत्सृजति, उपस्थ आनन्दं करोति पुत्रमुत्पादयतीत्यर्थः । एवमेताः कर्मेन्द्रियाणां वृत्तयो व्याख्याताः ॥ २६ ॥

अत्राह- मन इन्द्रियं तत् किं लक्षणमिति । अत्रोच्यते—

उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाच्च ॥ २७ ॥

उभयात्मकमत्र मनः । कर्मेन्द्रियेषु कर्मेन्द्रियम्, बुद्धीन्द्रियेषु बुद्धीन्द्रियम् । यथा देवदत्तो गोपालमध्ये स्थितो गोपालत्वं कुरुते मल्लमध्ये स्थितो मल्लत्वं कुरुते । कस्मात् ? यस्मात बुद्धीन्द्रियाणां वृत्तिं सङ्कल्पयति कर्मेन्द्रियाणां च । तस्मादुभयात्मकं मनः । किं चान्यत् । इन्द्रियं च साधर्म्यात् । सहधर्मस्य भावः साधर्म्यम् । यस्मात् कर्मेन्द्रियाणि बुद्धीन्द्रियाणि च सात्त्विकादहङ्कारादुत्पद्यन्ते, मनोऽपि तस्मादेव उत्पद्यते । तस्मादिन्द्रियं मनः । तत्र मनसः का वृत्तिः ? सङ्कल्पो वृत्तिः । बुद्धीन्द्रियाणां शब्दादयो वृत्तयः, कर्मेन्द्रियाणां वचनादयः । एवमेकादशेन्द्रियाणि सह वृत्तिभिर्व्याख्यातानि । अत्राह—एकादशेन्द्रियाणि केन कृतानि पुरुषेण ईश्वरेण आहोश्वित् स्वभावेनेति । कुत इयमाशङ्केति चेत्, इमान्येकादशेन्द्रियाणि एकादशविषयग्राहकाणि भवन्ति ।

तत्रान्तःकरणप्रधानबुद्ध्यहङ्काराद्यचेतनम् । ततश्च नूनं चेतनेन पुरुषेणेश्वरेण वा स्वभावेनेति । अत्रोच्यते-गुणपरिणाम-विशेषान्नानात्वं बाह्यभेदाच्च। सत्त्वादयस्त्रयो गुणास्ते यथा परिणमन्ति तस्माद्गुणपरिणामविशेषादिमान्येकादशेन्द्रियाणि नाना । तदर्थानि भिन्नानि । शब्दस्पर्शरूपरसगन्धाः पञ्चानां, वचनादानविहरणोत्सर्गानन्दाः पञ्चानां, सङ्कल्पश्च मनसः । एतेषामेव एकादशानामिन्द्रियाणि ग्राहकाणि भविष्यन्ति। अथै तन्नानात्वं नेश्वरेण न बुद्ध्या नाहङ्कारेण न प्रधानेन न पुरुषेण न स्वभावेन कृतम्, गुणपरिणामेनेति । यद्यपि उक्तमचेतनानां गुणानां वृत्तिरयुक्तेति। तन्न। कस्मादिति चेत्, तदुच्यते । अचेतनानामपि प्रवृत्तिर्दृष्टा । वक्ष्यति हि—

'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।

पुरुषस्य विमोक्षार्थं तथा प्रवृत्तिः प्रधानस्य ॥ इति ।

तस्मादचेतना अपि गुणा एकादशेन्द्रियभावेन परिणमन्ति । अत्राह—गृह्णीमस्तावदेकादशेन्द्रियाण्यहङ्कारादुत्पन्नानीति । एतेषामिन्द्रियाणां यथास्थाननिक्षेपः केन कृतः। चक्षुरुच्चैः सन्निविष्टं दूरालोकने समर्थं भविष्यतीति । शिरःप्रदेशे श्रोत्रं सन्निविष्टं दूरात् श्रवणसमर्थं भविष्यतीति । त्वक् शरीराभ्यन्तरे बहिश्च सन्निविष्टा नानास्पर्शग्रहणसमर्था भविष्यतीति । जिह्वा अन्तर्मुखसन्निविष्टा नानारसग्रहणसमर्था भविष्यतीति। एवं नासिका(१) वाक्। एवमिन्द्रियाणां निक्षेपः पुरुषेण वा कृत ईश्वरेण वा स्वभावेनेति । अत्रोच्यते—इह साङ्ख्ये पुरुषेश्वरस्वभावा न कारणम् । किं तर्हि—अस्मिन्नहङ्कारे स्थितैः सत्त्वरजस्तमोभिस्त्रिभिर्गुणैर्निक्षेपः कृतः। तस्माद्ब्रूमः—'गुणपरिणामविशेषान्नानात्वं

---

(१) अत्र 'वागादि च' इति पाठोऽपेक्षितः।

ग्राह्यभेदाच्च' । गुणपरिणामविशेषादेकादशेन्द्रियाणां भेदः । ग्राह्यभेदाच्च । ग्राह्या एकादशेन्द्रियार्थास्तेषां भेदादपीन्द्रियाणां भेदः ॥ २७ ॥

अत्राह—का कस्य वृत्तिः ? उच्यते—

**रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।**
**वचनादानविहरणोत्सर्गानन्दास्तु पञ्चानाम् ॥२८॥**

मात्रशब्दो विशेषार्थः । यथा भिक्षामात्रं लभ्यते नान्यो विशेषः । तथा चक्षुः । गतार्थे आलोचनमात्रमिति । एकैकस्य प्रतीन्द्रियं स्वविषयग्रहणसामर्थ्यमेव । न हि चक्षुः श्रवणसमर्थं दानादानसमर्थं वा ॥ २८ ॥

अत ऊर्ध्वं बुद्ध्यहङ्कारमनोवृत्तिं वक्ष्यामः । तदुच्यते—

**स्वालक्षण्या वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।**
**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥२९॥**

स्वालक्षण्येति । बुद्धेरध्यवसाय उक्तः प्राक् लक्षणम् । तस्याः स एवाध्यवसायो वृत्तिः । एवमभिमानोऽहङ्कारलक्षणम् । तस्य वृत्तिरपि स एव । मनसः सङ्कल्पो लक्षणम् । तस्यापि स एव वृत्तिः । येन येन लक्षणेनामी लक्ष्यन्ते तेषां स एव वृत्तिः । एवं या बुद्धीन्द्रियाणां न सा कर्मेन्द्रियाणाम् । या च कर्मेन्द्रियाणां न सा बुद्धीन्द्रियाणाम् । बुद्ध्यहङ्कारमनसां वृत्तिरभिहिता । साऽप्यसामान्या । अध्यवसायाभिमानसङ्कल्पलक्षणा । सैषा भवत्यसामान्या असाधारणा एवमुक्ते अर्थात् गम्यते सामान्याऽपि साधारणाऽपि वृत्तिरस्ति । यदपेक्षयाऽसामान्येत्युच्यते । एवमिन्द्रियाणामसामान्या वृत्तिराख्याता कुलस्त्रीसस्थानीया । अत ऊर्ध्वं सामान्या वृत्तिरुच्यते । सामान्यकरण-

वृत्तिः प्राणाद्या वायवः पञ्च। सामान्यकरणवृत्तिः–समस्त-स्यान्तःकरणस्येत्यर्थः। प्राणाद्या वायवः पञ्चेति प्राणापानोदान-समानव्यानाः सर्वेषामिन्द्रियाणां सामान्यं कुर्वन्ति । स प्राणो नाम यो मुखनासान्तरगो बाह्ये चास्य विषये वृत्तिः । प्राणनात् प्राण एष इत्यभिधीयते। अस्मिन् प्राणे यत् स्पन्दनकर्म तत् कत-मेन कृतम् इत्यत्रोच्यते–त्रयोदशविधेन करणेन कृतम् । यत-श्चैवम् तस्मात् प्राणकर्म सर्वस्य करणग्रामस्य वृत्तिः सामान्या । अपि चात्र दृष्टान्तः–यथा कस्मिंश्चित् राजगृहे पञ्जरे शुकाः प्रतिवसन्ति। तेभ्यो देवदत्तेन ओदनो दर्शितः। ओदनं दृष्ट्वा सर्वे प्रचालिताः । तदा पञ्जरकमपि चलितम् । यत् पञ्जरस्य प्रचल-नं कर्म तत् सर्वेषां शुकानां सामान्यम् । तद्वत् प्राणे यत् स्पन्द-नकर्म तत् सर्वेषामिन्द्रियाणां सामान्यम् । किं चान्यत्–अपाने-नोत्सृजति । इतश्चापक्रमणादपान इत्युच्यते । अपानबहुलश्च देव-दत्तः सर्पं दृष्ट्वा अपसर्पति एषोऽपानः । तस्मिन्नपाने यत स्पन्दन-कर्म तत् सर्वेषामिन्द्रियाणां सामान्या वृत्तिः । आरोहणादर्थोत्कर्षे उदान इत्यभिधीयते। नाभिप्रदेशादुत्थितं गच्छति। उदानवृत्तिश्च देवदत्त आनन्दोत्कर्षं मृगयति । अहमाढ्योऽस्मादाढ्यतरः कथं स्यामित्येष उदानः । अस्मिन्नुदाने यत्स्पन्दनकर्म तत् सामान्या वृत्तिः सर्वेन्द्रियाणाम् । किञ्चान्यत्–हृद्यवस्थानं सहभावश्च तेन समानः । यो वायुः हृद्देशे वर्तते स समानः। तद्बहुलश्च एकाकी न रमते एष समानः । तस्मिन् यत् स्पन्दनकर्म तत् सर्वेन्द्रि-याणां सामान्यवृत्तिः । किञ्चान्यत्– शरीरव्यापितया व्यानः । आनखादाकेशान्तं शरीरं व्याप्य अनति चलतीति व्यानः। व्यानबहुलो देवदत्तश्च अत्यन्तमन्येन विना रमते । तस्मिन् व्या-ने यत् स्पन्दनकर्म तत् सर्वेषामिन्द्रियाणां सामान्यवृत्तिः ।

तदेवं सामान्यकरणवृत्तिः प्राणाद्या वायवो व्याख्याताः ॥२९॥

वृत्तिं व्याख्यास्यामः। तदुच्यते–

**युगपच्चतुष्टयस्य हि वृत्तिः क्रमशश्च तस्य निर्दिष्टा।**
**दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥३०॥**

बुद्धिरहङ्कारो मनश्चक्षुरित्येतानि चत्वारि युगपत् रूपं पश्यन्ति अयं स्थाणुरयं पुरुष इति। एवं शब्दं स्पर्शं रसं गन्धं चत्वारि युगपत् गृह्णन्ति। एवमेषा युगपच्चतुष्टयस्य वृत्तिः। किं चान्यत्। क्रमशश्च तस्य निर्दिष्टा बुद्ध्यहङ्कारमनश्चक्षुश्चतुष्टयस्य क्रमशो वृत्तिर्भवति। द्वारिद्वारविभागोपदेशात् ह्रस्वकालत्वात् विभागो न शक्यते वक्तुं ततो युगपदित्युच्यते। यथा बालपत्रशतं सूच्यग्रेण विद्धमिति। तद्यथा। देवदत्तः पन्थानं गच्छन् स्थाणुं पश्यति तत्र तस्य संशयो भवति किमयं स्थाणुरुत पुरुष इति। तत्र स्थाणुरूपं पश्यति शकुनिं च तत्रस्थं ततोऽस्य बुद्धिर्भवति स्थाणुरयमिति। आकुञ्चनप्रसारणे करोति ततोऽपि पुरुषोऽयमिति प्रतीतिः। एवं बुद्ध्यहङ्कारमनश्चक्षुषां क्रमशो वृत्तिर्दृष्टा चक्षू रूपं पश्यति, मनः सङ्कल्पयति, अहङ्कारोऽभिमानयति, बुद्धिरध्यवस्यति। एवं रसनादिष्वपि द्रष्टव्यम्। किं चान्यत्–दृष्टे तथाऽप्यदृष्टे। (१)त्रयस्य तत्पूर्विका वृत्तिः। तच्छब्देन समनन्तरोक्तानि बुद्धीन्द्रियाणि भवन्ति। रूपे चक्षुःपूर्विका, शब्दे श्रोत्रपूर्विका, स्पर्शे त्वक्पूर्विका, रसे जिह्वापूर्विका, गन्धे घ्राणपूर्विका बुद्ध्यहङ्कारमनसां वृत्तिरिति ॥ ३० ॥

अत्राह––अचेतनानीन्द्रियाणि बुद्ध्यहङ्कारौ मनश्चेति। केन हेतुना स्वां स्वां वृत्तिं प्रतिपद्यन्ते इत्यत्राह—

(१) किञ्चित् त्रुटितं भाति।

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम् ॥ ३१ ॥

स्वां स्वामिति वीप्सामिच्छन्ति । (इति त्रयोदशविधस्य करणस्य ग्रहणं कृतं भवति) । प्रतिपद्यन्ते गृह्णन्तीत्यर्थः । किं चान्यन्–परस्पराकूतहेतुकां वृत्तिम् । बुद्धेराकूतं ज्ञात्वा अहङ्कारोऽभिमानयति, मनः सङ्कल्पयति, इन्द्रियाणि स्वां स्वां वृत्तिं प्रतिपद्यन्ते । आकूतं नामाभिप्रायः । यथा किल चौरसेना ग्रामं हन्तुं गच्छति तत्र चौरसेनापतिना सङ्केतः कृतोऽस्ति यदाऽहं हा हेति ब्रवीमि तदा सर्वैः समवायेन प्रवेष्टव्यम् । यदा पुनरहमहा हेति ब्रवीमि तदा निर्गन्तव्यम् । एतां चौरसेनापतेराज्ञामाकूतं ज्ञात्वा चौराः प्रविशन्ति निर्गच्छन्ति च । तथेह चौरसेनापतिस्थानीया बुद्धिः चौरस्थानीयानीन्द्रियाणि । किं स्वार्थं विषयं प्रतिपद्यन्ते आहोस्वित् परार्थमित्यत्रोच्यते । परार्थं गम्यते । यस्मादाह–पुरुषार्थ एव हेतुः पुरुषार्थः कर्तव्य एव इति गुणानां प्रवृत्तिः । तस्मादेतत् त्रयोदशविधं करणं पुरुषार्थः प्रवर्तयति । यदप्युक्तम्–अचेतनानि करणानि कथं प्रवर्तन्त इति । अत्र ब्रूमः–न केनचित् कार्यते करणम् । नेश्वरेण नापि पुरुषेण । स्वभावो नाम कश्चित्पदार्थो (ना)स्ति । यस्मात्स्वयमेव च त्रयोदशविधं करणं स्वे स्वे विषये प्रवर्तते इति ॥ ३१ ॥

अत्राह–उक्तं च भगवता न केन चित् कार्यते करणमिति ।

तत् कतिविधं करणमिति ? अत्रोच्यते—

करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।
कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥

यदत्र करणमित्युक्तं तत् त्रयोदशविधमिति बोद्धव्यम् । पञ्च

कर्मेन्द्रियाणि, पञ्च बुद्धीन्द्रियाणि, बुद्ध्यहङ्कारौ मन इति एतत् त्रयोदशविधं करणमिति। अत्राह—आहारकं धारकं प्रकाशकं च तदिति। तत्राहारकमिन्द्रियलक्षणम्। धारकमभिमानलक्षणम्। प्रकाशकं बुद्धिलक्षणम्। अत्राह—किं तदस्ति यस्याहरणं धारणं प्रकाशनं च क्रियते। अत्रोच्यते—कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च। कार्यमिति शब्दस्पर्शरसरूपगन्धाः पञ्च, वचनादानविहरणोत्सर्गानन्दाः पञ्च। एते दश विषयाः कार्यमित्युच्यते। तं दशविधं विषयं बुद्धीन्द्रियैः प्रकाशितमर्थं कर्मेन्द्रियाण्याहरन्ति धारयन्ति च। तद्यथा तमसि स्थितं प्रदीपेन प्रकाशितं घटं हस्त आदत्ते धारयति च। तदेवं यथा घटं तथा शेषाण्यपि॥ ३२॥

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्॥ ३३॥**

अन्तःकरणं त्रिविधमिति बुद्ध्यहङ्कारमनसां ग्रहणम्। एतत् त्रिविधमन्तःकरणसंज्ञितम्। दशधा बाह्यं बुद्धिकर्मेन्द्रियभेदात्। किं चान्यत्। त्रयस्य विषयाख्यं बुद्ध्यहङ्कारमनसां त्रयाणामन्तःकरणानां बाह्यं दशविधं करणं विषयाख्यं विषय उपभोग्यमिति। आभ्यन्तरं त्रिकं स्वामिभूतं बाह्यं दशविधं भृत्यभूतमित्यर्थः। किं चान्यत्—साम्प्रतकालं बाह्यम्। यदेतद्बाह्यं दशविधं करणमुक्तं तत् साम्प्रतकालं वर्तमानविषयग्राहकं भवति। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि वर्तमानान्येव शब्दादीनि गृह्णन्ति। नातीतानि न च भावीनि। एवं वाक्पाणिपादपायूपस्थानि वर्तमानेषु वचनादेयभूमिमलोत्सर्गानन्देषु प्रवर्तन्ते नातीतभविष्यतोः।

किंचान्यत्–त्रिकालम् आभ्यन्तरं मनोऽहङ्कारबुद्धिरूपं करणं प्रवर्तते। बुद्धिर्वर्तमानं घटं बुद्ध्यते अतीतं भविष्यन्तं च स्मरति। तद्यथा–युधिष्ठिरभीमसेनावास्ताम् अतीतविषयग्राहिणी बुद्धिः। कल्की भविष्यति भाविवस्तुग्राहिणी। एवमहङ्कारोऽपि त्रिकालवान्। यथाऽहमस्मिन् गृहे स्वामी आसं भविष्यामि चेति। एवं मनोऽप्यतीतं सङ्कल्पयति वर्तमानं भावि च। यत एवं तस्मादुच्यते 'त्रिकालमाभ्यन्तरं करणम्' इति॥ ३३॥

अत्राह–कानि इन्द्रियाणि सविशेषं विषयं गृह्णन्ति, कानि निर्विशेषम्। अत्रोच्यते—

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि।**
**वाग्भवति शब्दविषया शेषाण्यपि पञ्चविषयाणि॥ ३४॥**

तेषाम् करणानां मध्ये येषामयमधिकारो वर्तते तेषां यानि बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च तानि सविशेषं गृह्णन्ति अविशेषमपि विषयं गृह्णन्ति। अत्राह–कस्य सविशेषं विषयं गृह्णन्ति कस्य निर्विशेषमिति। अत्रोच्यते शब्दस्पर्शरसरूपगन्धाः पञ्च देवानां तन्मात्रसंज्ञिता निर्विशेषाः केवलसुखलक्षणत्वात्। यस्मात्तत्र दुःखमोहौ न स्तः तस्मान्निर्विशेषास्ते इति। तथा हि। विशिष्यन्ते शान्तघोरमूढत्वादिनेति विशेषाः तैः सह सविशेषाः, केवला निर्विशेषा इति तात्पर्यम्। एवं शब्दादयो मनुष्याणां सविशेषाः सुखदुःखमोहयुक्ता इत्यर्थः। देवानां तु बुद्धीन्द्रियाणि निर्विशेषं सुखात्मकं प्रकाशयन्ति। उक्तानि बुद्धीन्द्रियाणि देवानां मानुषाणां च। कर्मेन्द्रियाणि वक्ष्यामः। **वाग्भवति शब्दविषया शेषाण्यपि पञ्च विषयाणि।** तत्र देवानां वाक् पादं पादार्धं श्लोकमुच्चारयति। अस्माकमपि

तथैव । अतो देवानामस्माकं च वागिन्द्रियं तुल्यमित्यर्थः । किं चान्यत्–शेषाण्यपि पञ्चविषयाणि इति । तेषां चतुर्णामेकैकं पञ्चविषयम् । पाणिस्तावत् शब्दस्पर्शरसरूपगन्धयुक्तः । एवं पञ्चलक्षणमेव पाणीन्द्रियं सन्निकृष्टं पञ्चलक्षणं घटं गृह्णाति । (यस्मात् पञ्चलक्षणं हस्तं हस्तेन्द्रियं च) । एवं शब्दादिपञ्चलक्षणः पादः पञ्चात्मिकायामेव भुवि विहरति । एवं पञ्चलक्षणे पायूपस्थे अपि पञ्चलक्षणावुत्सर्गानन्दौ कुरुतः । तस्मात् युक्तमभिहितम्–'शेषाण्यपि पञ्चविषयाणि' इति ॥ ३४ ॥

इदानीं बुद्धिविषयख्यापनाय इदमुच्यते—

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।**
**तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥**

**सान्तःकरणा** अन्तःकरणे अहंमनसी ताभ्यां सह वर्तते या बुद्धिः सा तथोक्ता। सा बुद्धिः सर्वं विषयं निरवशेषं त्रिष्वपि कालेषु यस्मादवगाहते व्याप्नोति गृह्णाति शब्दाद्यं पञ्चविधं तस्मादेव तन्मनोबुद्ध्यहङ्कारलक्षणं त्रिविधमेव करणं साधनं, क्रियतेऽनेनेतिकृत्वा। शेषाणि पुनः द्वारि बाह्ये यानि बुद्धिकर्मेन्द्रियतया प्रतीतानि श्रोत्रवाक्प्रभृतीनि दश तानि तस्या एव मनोऽहङ्कारयुक्ताया बुद्धेर्विषयग्रहणाय द्वाराणि प्रतीकान्येव न तु करणतया सान्वयानि । तथा एतैर्दशभिर्द्वारैः सान्तःकरणा बुद्धिरेव विषयान् गृह्णातीति त्रिविधमेव करणमित्यर्थः ॥ ३५ ॥

किञ्चान्यत्–

**एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।**
**कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥**

एते इति बुद्धिकर्मान्तःकरणभेदाः त्रयोदश प्रदीपकल्पाः

प्रदीपतुल्याः । किं चान्यत् । परस्परविलक्षणाः । भिन्नलक्षणा विसदृशा इत्यर्थः । श्रोत्रं हि शब्दं गृह्णाति, न स्पर्शादीन् । एवमितरत्र । वाग्वक्त्येव न गृह्णाति गच्छति विहरत्यानन्दति । एवं पाण्यादिषु । मनः सङ्कल्पयति नाहं कुरुते । अहङ्कारश्चाभिमनुते न सङ्कल्पयति । एवं द्वादशापि स्वं स्वमर्थं पुरुषभोग्यतया प्रकाश्य बुद्धौ प्रयच्छन्ति निक्षिपन्ति । तत् बुद्धिस्थं विषयं सुखदुःखाद्यं पुरुष उपलभते ॥ ३६ ॥

किञ्चान्यत् —

**सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।**
**सैव च विशिनष्टि ततः प्रधानपुरुषान्तरं सूक्ष्मम् ॥३७॥**

निर्विशेषं त्रिष्वपि कालेषु यो यो विषयं प्रति उपभोगो देवतिर्यङ्‌योनिषु तं तं पुरुषस्य यस्मात् हेतोः बुद्धिरेव साधयति निष्पादयति । राजामात्यवत् । यथा सर्वेषां भृत्यानां मन्त्री उपलब्धिं विधाय राजनि निवेदयति । एवं कर्मेन्द्रियाणि प्रकाश्य बुद्धौ प्रयच्छन्ति । बुद्धिरपि पुरुषाय प्रयच्छति समर्पयति । अनेन प्रकारेण बुद्धिरभ्युदयफलेन यावज्ज्ञानं नोत्पद्यते तावत् पुरुषं योजयति । स्वैरिणीव कामुकं मूढविज्ञानं घृताद्युपचारैः । बुद्धिप्रेरिता अहंमनोबुद्धिकर्मेन्द्रियाख्या विषयान् न स्वार्थं न च बुद्ध्यर्थं किं तु पुरुषार्थमेव साधयन्ति । यथा सलक्ष्मीकस्वैरिणीगृहे दास्यस्तदादेशेन रसवतीं न स्वार्थं न च स्वामितयाऽवस्थितस्वैरिण्यर्थं किं तु तयापहृतविवेकविज्ञानस्य कामुकस्य कृते निर्वर्तयन्ति तद्वत् । यावदसौ विमूढस्तावदनया बुद्ध्या स्वैरिण्येव कामुको विषयैरुपह्रियते । यदासौ कथमपि गुरुशास्त्रात्मानुभवादिभिरात्मानं चेतयते तदा स्वैरि-

णीव बुद्धिरपि पुरुषं विहाय संशाम्यति । ततोऽसौ केवलतयाऽवतिष्ठते । तदनुभवावस्थितिर्मुक्तिरिति यत् किञ्चिदिदमप्रस्तुतम्। प्रस्तुतमुच्यते। किञ्चान्यत् । अतः सैव च विशिनष्टि ततः प्रधानपुरुषान्तरं सूक्ष्मम् । सूक्ष्मं दुर्विज्ञेयम् । प्रधानपुरुषान्तरं नानात्वम् । सूक्ष्मत्वादतीव दुर्बोधमिति यावत् । बुद्धिर्हि अध्यवसायात्मिका स्वव्यापारेण चाध्यवसायेन साधयति । अहङ्कारेन्द्रियतन्मात्रभूताध्यवसायेन जगत् प्रधानपुरुषान्तरविवेचनेन विविच्य स्वयं म्रियते । अत एवोक्तम्—

अहङ्कारो धियं ब्रूते मैनं सुप्तं प्रबोधय ।
प्रबुद्धे परमानन्दे न त्वं नाहं न तज्जगत् ॥
मयि तिष्ठत्यहङ्कारे पुरुषः पञ्चविंशकः ।
तत्त्ववृन्दं परित्यज्य स कथं मोक्षमिच्छति ॥
योऽसौ सर्वेश्वरो देवः सर्वव्यापी जगद्गुरुः ।
देहीतिपदमुच्चार्य हा मयात्मा लघुः कृतः ॥

अकृतपुण्यचरणैर्न प्राप्यं प्रधानपुरुषयोर्नानात्वम् । तयोरेवान्तरं दर्शयति । त्वमन्यमात्मानं न वेत्सि । प्रधानमन्यत् । सत्त्वरजस्तमांसि त्रयो गुणाः प्राधानिका अमूर्ताः साम्यावस्थायां प्रधानाख्याः । तेषामेकतमोद्रेकात्त्रिगुणा बुद्धिरन्या, अन्योऽहङ्कारः, पञ्चतन्मात्राण्यन्यानि, एकादशेन्द्रियाण्यन्यानि इति बुद्ध्वा तत्त्वानि मोक्षं गच्छन्ति । न हि भगवतः कपिलस्य मते किमपि कर्तव्यमनुष्ठेयतया, किं तु साङ्ख्यानां पञ्चविंशतितत्त्वज्ञानमेव साधर्म्येण वैधर्म्येण च निःश्रेयसहेतुः । उक्तं च—

हस पिब लल मोद नित्यं विषयानुपभुञ्ज कुरु च मा शङ्काम् ।
यदि विदितं ते कपिलमतं तत्प्राप्स्यसे मोक्षसौख्यं च ॥३७॥

अत्राह—उक्तं भगवता पूर्वस्यामार्यायां 'विशेषाविशेषविषयाणीन्द्रियाणि' इति। तत्र के विशेषा केऽविशेषा इति। अत्रोच्यते-

तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः।
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८॥

यानि भूतादिसंज्ञात्तामसादहङ्कारादुत्पन्नानि पञ्च तन्मात्राणि शब्दादीनि तान्यविशेषा इत्युच्यन्ते। देवानां तन्मात्राणि सुखलक्षणा विषयाः तत्रापि रजस्तमसी स्तः किं तु तत्र सत्त्वमुत्कटत्वेन वर्तते तस्मादविशेषा इत्युच्यन्ते। न विशिष्यन्ते शान्तघोरमूढत्वादिभिः सत्त्वोद्रेकात् केवलसुखतया इत्यर्थः। तर्हि विशेषाः के? अत्राह-तेभ्यो भूतानि पञ्च पञ्चभ्यः। शब्दादिभ्य. पञ्चभ्यः आकाशादीनि पञ्चमहाभूतानि पूर्वपूर्वानुप्रवेशादेकद्वित्रिचतुष्पञ्चगुणान्युत्पद्यन्ते। एते स्मृता विशेषाः। अत्राह—एतेषां किं लक्षणमिति। अत्रोच्यते। एतानि पञ्च महाभूतानि मनुष्याणां विषयाः। शान्ता घोरा मूढाश्च। तत्राकाशं शान्तं घोरं मूढं च। शान्तं तावत् सुखलक्षणम्। यथा कश्चिद्गर्भगृहात् निष्क्रान्तः अवकाशस्थितः तस्य तदाकाशं सुखहेतुत्वाच्छान्तं स्यात्। तदेवोष्णशीतवातादिसंयोगात् दुःखत्वात् घोरं स्यात्। पथि गच्छतः कान्दिशीकस्य केवलं सर्वत्राकाशं पश्यतो मार्गाद्यनभिज्ञस्य पुंसस्तदेव मूढं स्यात्। एवं वायौ त्रैविध्यम्। यथा गर्भगृहवासिनो वातायनद्वारेण वायुः प्रविशन् सुखहेतुत्वाच्छान्तः। तेनैवोष्णमासि सम्पन्नेन दुःखोत्पादकतया दुःखी स्यात् इत्यसौ वायुर्घोरः। स एव वायुः शीतकाले शीतं जनयन् मूढः। एवमग्निः शीतार्तस्य शान्तः। ग्रीष्मकाले तापार्त-

स्य घोरः। ग्रामादिदाहे मदृद्धोऽग्निः पुंसो मोहोत्पादकतया मूढः। एवमापो घर्मार्तस्य सुखदत्वाच्छान्ताः। हेमन्ते दुःखदत्वात् घोराः। समुद्रमध्यगतस्य पुंसः तीरमपश्यतो मोहहेतुत्वान्मूढाः। एवं पृथ्वी नवशाद्वलोपचिता प्रावृषि सुखकारिणीति शान्ता। ग्रीष्मकाले उष्णवालुका घोरा। सैव पथिकस्य मार्गानभिज्ञस्य प्राणिग्रामाद्यपश्यतो मूढा। एवं देवानां निर्विशेषा विषयाः। तन्मात्रसंज्ञिता निर्विशेषाः केवला एवानन्दमयाः शान्तघोरमूढतयाऽविशिष्टाः स्वभावरूपाः शर्कराकटुतिक्तादिरसा निश्चितं स्वभावमाधुर्यामृता उपमेयसुखशालिक्षीरमिव। माधुर्य क्षारकट्वादिपार्थिवगुणसंपृक्तं स्वभावरसं जलमिवामी विषयाः(?)। देवानामेवं निर्विशेषाः स्युः। तन्मात्रसंज्ञिताः सुखलक्षणा एव। मनुष्याणां वियदादिभूतमयत्वात् भूतानीव सुखदुःखमोहलक्षणास्ते इत्यर्थः॥ ३८॥

अत्राह—किमेतावन्त एव विषयाः, न हि। किं त्वन्येऽपि सन्ति। के पुनस्ते इति? उच्यते।

**सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते॥ ३९॥**

तत्र सूक्ष्मास्तावत् पञ्चतन्मात्रकाः तैरेवादिसर्गे; सूक्ष्मशरीराणि त्रयाणामपि लोकानां प्रारब्धानि। तत् सूक्ष्मशरीरमृतुकाले मातुरुदरं प्रविशति। मातृ रुधिरं पितुः शुक्रम्। वेदान्तवादिनोऽप्येवमाहुः। प्राणिनः स्वर्गनरकादिषु स्वकर्मभोगानन्तरमत्राजिगमिषवः सोममण्डले लीना भूत्वा वृष्ट्यो भवन्ति। ततोऽन्नम्, तत् स्त्रीपुंसाभ्यामुपभुक्तं शुक्रशोणिते, ततः पुरुष इति। "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषव-

चस ( छां० उ० अ० ५ खं० ३ कं० ३ । ) इत्यारभ्य "इति तु पञ्चम्यामाहुतावाप" ( छां० उ० अ० ५ खं० ९ कं० १ ) इत्याहुः । पुराणेष्वपि

सोमवृष्ट्यन्नरेतांसि पुरुषस्तत्र पञ्चमः ।

स जीवत्यग्नये पश्चाद्धरन्त्यस्माद्यतोऽभवत् ॥ इति ।

तदेवं सूक्ष्मशरीरस्योपचयं करोति । मातुरशितपीतान्नरसो मातृनाडीसम्बन्धेन प्रविश्य सूक्ष्मशरीरस्य शुक्रशोणितमयस्योपचयं कुरुते । मातुश्च नाड्या बालस्य नाभिरन्ध्रं प्रविशति । यथैकेन मार्गेण शाकवाटस्याप्यायनमुदकं करोति । एवमन्नपानस्य रसो मातृनाडीगतो बालस्य नाभिं प्रविशति । प्रविश्य बालशरीरस्याप्यायनं करोति । तत्र सूक्ष्मशरीरस्याकृतिः यादृग्लक्षणा बहिःशरीरस्य भवति हस्तपादशिरःपृष्ठोदरजङ्घागुल्फ इति । अपि च शिष्टा वदन्ति बहिःशरीरं षाट्कौशिकमिति । रुधिरमांसत्वचो मातृजा स्नाय्वस्थिमज्जानः पितृजाः । एवमेतद्बाह्यशरीरमाभ्यन्तरसूक्ष्मशरीरस्योपचयं कुरुते । तस्यैव बहिःशरीरोपचितस्य सूक्ष्मशरीरस्य प्रसवकाले योन्या निर्गतस्य मातुरुदरात् बाह्यानि पञ्चमहाभूतानि पृथिव्यादीनि विहरणसंस्थानीयानि कृतानि । यथा कस्य चित् राजकुमारस्य मातापितृभ्यामुपचितस्य पञ्चमहाभूतानि कृतानि । आकाशमवकाशने, भूमिर्विहरणे, आपः पिण्डीकरणे शुद्धौ च, अग्निराहारपचने, वायुर्व्यूहने अस्य शरीरस्यैवमेते विशेषाः त्रिविधाः । सूक्ष्मा मातापितृजाः सह प्रभूतैः । प्र इत्युपसर्गः । एवं सूक्ष्मा मातापितृजा भूतानि चेत्यर्थः । तानि च पृथिव्यादीनि । एवमेते त्रिधा विशेषाः । ये चान्ये प्रागभिहिता विशेषाः शान्ता घोरा मूढाश्च । अत्राह—एतेषु त्रिष्वपि

विशेषेषु के नित्याः केऽनित्या इत्यत्रोच्यते—सूक्ष्मास्तेषां नियताः । सूक्ष्मा इति यैरादिसर्गारम्भस्ते नियता नित्या इत्यर्थः । तैरारब्धं सूक्ष्मशरीरमस्मिन् स्थूलशरीरे पतति तद्धर्मेण संयुक्तं पशुमृगपक्षिसरीसृपस्थावरान्तानि पञ्च स्थानानि पश्यति । धर्माधर्मयोः साम्येन ब्राह्मणादीनि चण्डालान्तानि पश्यति । एवं सूक्ष्मशरीरं नियतं यावत् संसारमित्यर्थः । तत् यावत् ज्ञानं गुणपुरुषान्तरोपलब्धिरूपं नोत्पद्यते तावत्संसरति उत्पन्ने ज्ञाने निवर्तते । तस्मिंश्च निवृत्ते पुरुषो मोक्षं गच्छति । उक्तं च—

देहे मोहाश्रये भग्ने युक्तः स परमात्मनि ।
कुम्भाकाश इवाकाशे लभते चैकरूपताम् ॥

"यथा दर्पणाभाव आभासहानौ" इत्यादि । तस्मादेतत् सूक्ष्मम्(१) । मातापितृजा निवर्तन्ते तत् सूक्ष्मशरीरं परित्यज्य मरणकाले मातापितृजं पतति । तत् सूक्ष्मशरीरं ज्ञानमविदुषां संसरति ॥ ३९ ॥

अत्राह—उक्तं च भगवता—'मातापितृजा निवर्तन्ते तत् सूक्ष्मं संसरतीत्यर्थः । (२)अत्रोच्यते—

**पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।**
**संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥**

पूर्वोत्पन्नमित्यादि । सर्गोत्पन्नमित्यर्थः । यावत् ज्ञानं नोत्पद्येत तावत् संसारे स्थिरतरं स्थितमित्यर्थः । किञ्चान्यत्—असक्तं, क्वचिन्न सक्तमित्यसक्तम् देवमानुषतिर्यक्षु सूक्ष्मत्वात् । नियतं नित्यमित्यर्थः । पञ्च कर्मेन्द्रियाणि पञ्च बुद्धीन्द्रियाणि

(१) अत्र 'नियतम्' इत्यपेक्षितम् ।
(२) अत्र 'कथमिति चेत्' इत्यपेक्षितम् ।

पञ्च तन्मात्राणि मनोबुद्धिरहङ्कार एवमष्टादश–महदादिसूक्ष्म पर्यन्तमिति । महान्यस्यादौ, सूक्ष्माणि तन्मात्राणि शब्दादिवि षयाख्यान्यन्ते यस्य तत्तथोक्तम् । अन्तःकरणबहिःकरणानि त्रयोदश तन्मात्राणि पञ्च चेति । अत्राह–तत्किं करोति । अत्रो- च्यते–संसरति देवमानुषतिर्यक्योनिषु जीवभावमागच्छति । तद्धि निरुपभोगं शब्दादयो विषया उपभोगास्तैर्विरहितम् । त्रयोदशकरणात्मकमेवेत्यर्थः । भावैरधिवासितं देवमानुषति- र्यक्भावाधिवासितमेवेत्यर्थः । यथा तिलपतनवस्त्रवासनवत् ? तद्वत् शान्ता भावा भवन्ति । देवभावाः शुभेन मिश्रेण मानुषा अशुभेन तिर्यक्त्वं । लिङ्गं प्रलयकाले प्रधाने लयं गच्छति इति लिङ्गम् । प्रकर्षेण धीयते क्षिप्यतेऽत्र सर्वमिति प्रधानम् ॥ ४१ ॥

अत्राह—सूक्ष्मशरीरेण नास्ति प्रयोजनम् । तर्हि त्रयोद- शविधं करणमेव कथं संसरतीति ? अत्रोच्यते–

**चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा छाया ।**
**तद्वद्विना ऽविशेषैस्तिष्ठति न निराश्रयं लिङ्गम् ॥ ४१ ॥**

इहाश्रयाश्रयिणोः सम्बन्धो दृष्टः । न ह्याश्रयं विनाऽऽश्र- यी तिष्ठति । कुड्यपटाश्रयं कृत्वा चित्रमवतिष्ठते । तदिदं सूक्ष्म- शरीरं कुड्यपटस्थानीयं चित्रसंस्थानीयं त्रयोदशविधं करणम् । तदेवं सति यदुक्तं भवता त्रयोदशविधं करणमेव संसरति इति त- न्मिथ्या।किं चान्यत्–स्थाण्वादिभ्यो विना यथा छाया इति। स्थाणुपुरुषादिभिर्विना यथा छाया न भवति। छायां विना ते च न भवन्ति । यथाऽग्निना विना प्रकाशो न भवति । तद्वद्विना- विशेषैस्तिष्ठति न निराश्रयं लिङ्गमिति । अविशेषा इति तन्मात्राणि स्वाभाविकक्षीरजलवत् शान्तघोरमूढत्वरहितत्वात् ।

तैरारब्धं सूक्ष्मशरीरम्। तेन सूक्ष्मशरीरेण सर्गादिप्रारब्धेन विना निराश्रयं त्रयोदशकरणाख्यं लिङ्गं न तिष्ठति। अतो यदुक्तं भवता 'किमविशेषैरारब्धसूक्ष्मशरीरकल्पनया प्रयोजनं त्रयोदशविधं करणमेव संसरति इति' तत् मिथ्या ॥ ४१ ॥

अत्राह—सूक्ष्मशरीरं त्रयोदशविधकरणसम्पन्नं केन हेतुना संसरतीति ? अत्रोच्यते—

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।**
**प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥**

पुरुषार्थः कर्तव्य इति प्रधानस्य तावत् प्रवृत्तिः। स चार्थो द्विविधः। शब्दाद्युपलब्धिलक्षणो गुणपुरुषान्तरोपलब्धिलक्षणश्च। शब्दाद्युपलब्धिर्ब्रह्मलोकादिषु भोगावाप्तिर्गुणपुरुषान्तरोपलब्धिर्मोक्ष इति। तस्मादुक्तम्—पुरुषार्थहेतुकमिदं सूक्ष्मशरीरमिति। किंचान्यत्—निमित्तनैमित्तिकप्रसङ्गेन। तत्र निमित्तं धर्माद्यष्टविधम्(१)। तत् पुरस्तात् वक्ष्यामः 'धर्मेण गमनमूर्ध्वम्'इत्यादि। प्रकृतिः प्रधानम्। विभुत्वं प्रभुत्वं तस्य योगात् (तद्विभुत्वयोगात्)। यथा कश्चित् राजा प्रभुत्वयोगेन स्वराष्ट्रे यत् यत् इच्छति तत् तत् करोति। एवं प्रधानमपि प्रभुत्वयोगेन मानुष्यं वा दैवं वा तैर्यक्योन्यं वा कुरुते। एवं सूक्ष्मशरीरं त्रयोदशविधेन करणेन संयुक्तं हस्तिन्या उदरं प्रविश्य हस्ती भवति। स्त्रीशरीरं प्रविश्य मनुष्यो भवति। (२)पशुर्भवति। तस्मात् न(३) टवत् व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥

(१) अत्र 'नैमित्तिकमूर्ध्वगमनादि'इत्यपेक्षितम्।

(२) अत्र 'पशुशरीरं प्रविश्य' इत्यपेक्षितम्।

(३) यथा नटः पटान्तरेण प्रविश्य देवो भूत्वा निर्गच्छति पु-

अत्राह–उक्तं पुरा भावैरधिवासितं लिङ्गं सूक्ष्मशरीरं संसरति। तत्के भावा इति? अत्रोच्यते—

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः।**
**दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥४३॥**

त्रिविधा भावाश्चिन्त्यन्ते। तत्र केचित् सांसिद्धिकाः, केचित् प्राकृतिकाः, केचित् वैकृताः। तत्र सांसिद्धिकास्तावत्। यथा कपिलस्य भगवतः परमर्षेरादिसर्गे उत्पन्नस्य इमे चत्वारो भावाः सहोत्पन्ना धर्मो ज्ञानं वैराग्यमैश्वर्यमिति। एते सांसिद्धिका उच्यन्ते। प्राकृतिका नाम ब्रह्मणः पुत्राः किल सनकादयो बभूवुः। तेषामुत्पन्नकार्यकारणानां शरीरवतां षोडशवर्षाणामेवैते चत्वारो भावा अकस्मादेवोत्पन्ना निधिदर्शनवत्। एते च प्राकृतिका भावा उच्यन्ते। वैकृतिका यथा–आचार्यादिमूर्तिमधिकृत्य उत्पन्ना वैकृतिका इत्युच्यन्ते। आचार्यं निमित्तं कृत्वा ज्ञानमुत्पद्यते। ज्ञानात् वैराग्यं, वैराग्याद्धर्मो, धर्मादैश्वर्यम्। एवमेते चत्वारो भावा अस्मदादिष्वपि वर्तन्ते। तदेवं वैकृता इत्युच्यन्ते। एवमेते त्रिधा भावा व्याख्याता यैराधिवासितं महदादि लिङ्गं संसरति। अत्राह–धर्मो, ज्ञानं, वैराग्यमैश्वर्यम् अधर्मोऽज्ञानमवैराग्यमनैश्वर्यम्। एवमेतेऽष्टौ भावाः क्व वर्तन्ते? पूर्वर्षिभिः दृष्टाः करणाश्रयिणः। करणान्युच्यन्ते बुद्धिकर्मान्तःकरणभेदाः त्रयोदश। तान्याश्रित्याष्टौ भावाः प्रवर्तन्ते। उक्तं हि "अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्" इत्येवमादि। किं चान्यत्–कार्याश्रयिणश्च कललाद्याः। यथा सूक्ष्मशरीरमुत्पत्तिकाले मातुरुदरं प्रविशति।

---

नर्मानुषः। एवं लिङ्ग निमित्तनैमित्तिकप्रसङ्गेन उदरान्तः प्रविश्य नानारूपं धत्ते।

मातुः रुधिरं पितुः शुक्रं तस्य सूक्ष्मशरीरस्योपचयं कुरुते । कललबुद्बुदघनमांसपेशीगर्भकुमारयौवनस्थाविरादयोऽन्नपानरसनिमित्ता उत्पद्यन्ते । तत उच्यते–'कार्याश्रयिणश्च कललाद्या' इति । कललग्रहणं विरागनिमित्तम् ॥ ४३ ॥

उक्तं पूर्वस्यामार्यायां 'निमित्तनैमित्तिकप्रसङ्गेन' 'नटवत् व्यवतिष्ठते लिङ्गम्' इति । तत्र किं निमित्तं किं च नैमित्तिकमिति ? अत्रोच्यते—

**धर्मेण गमनमूर्ध्वं गमनमधस्तात् भवत्यधर्मेण ।**
**ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥**

तत्र धर्मो निमित्तम् । इह लोके धर्मं यः कुरुते तन्निमित्तं कृत्वा सूक्ष्मशरीरमूर्ध्वं गच्छति । ऊर्ध्वमिति अष्टानां देवयोनीनां ग्रहणम् । तत्र आद्यं ब्राह्मम् । प्राजापत्यम्, ऐन्द्रं, पित्र्यं, गान्धर्वं, याक्ष, राक्षसं, पैशाचम् इत्येतान्यष्टौ स्थानानि सूक्ष्मशरीरं गच्छति । तत्र धर्मो निमित्तम्, ऊर्ध्वगमनं नैमित्तिकम् । किं चान्यत्- गमनमधस्ताद्भवत्यधर्मेण । इह लोके यमनियमलक्षणो धर्मस्तद्विपरीतो ह्यधर्मः तेनाधर्मेण सूक्ष्मशरीरमधस्ताद्गच्छति पश्वादि । पशुमृगपक्षिसरीसृपस्थावरमिति पञ्चधा तिर्यक् स्थावरान्तम् । अत्राऽधर्मो निमित्तम् अधोगमनं नैमित्तिकम् । किं चान्यत्–ज्ञानेन चापवर्गः । यत् पञ्चविंशतितत्त्वज्ञानं तेन ज्ञानेन तत्सूक्ष्मशरीरं निवर्तते । परमात्माऽपवर्गं प्राप्नोति मोक्षं गच्छतीत्यर्थः । अतो ज्ञानं निमित्तं अपवर्गो नैमित्तिकः । अन्यच्च विपर्ययादिष्यते बन्धः । कस्य विपर्ययात् । ज्ञानस्य विपर्ययोऽज्ञानं, तेनाज्ञानेनाहं दर्शनीयः सुभगोऽहं भोक्ताऽहमिति मन्यते । तेनाज्ञानेन मनुष्यतिर्यक्देवेष्वात्मानं

निबध्नाति । न मोक्षं गच्छतीत्यर्थः । अतोऽज्ञानं निमित्तं बन्धो नैमित्तिकः । स च बन्धस्त्रिविधः । प्रकृतिबन्धो वैकारिकबन्धो दक्षिणाबन्धश्चेति । तत्र प्रकृतिबन्धो नामाष्टासु प्रकृतिषु परत्वेनाभिमानः । वैकारिकबन्धो नाम ब्रह्मादिस्थानेषु श्रेयोबुद्धिः । दक्षिणाबन्धो नाम गवादिदानेज्यानिमित्तः । एवं चतुर्विधं निमित्तनैमित्तिकं व्याख्यातम् ॥ ४४ ॥

अन्यदप्येवंविधमुच्यते चतुर्धा —

**वैराग्यात्प्रकृतिलयः संसारो राजसाद्भवति रागात् ।**
**ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५ ॥**

यथा कस्यचिद्वैराग्यमस्ति । ( जितेन्द्रियो विषयेभ्यो विरक्तो न यमनियमपरः केवलम् ) न तु ज्ञानमस्ति गुणपुरुषान्तराख्यम् । तेनाज्ञानेन वैराग्यपूर्वेण नास्ति मोक्षः । केवलमष्टासु प्रकृतिषु लयो भवति प्रधानबुद्ध्यहङ्कारतन्मात्रेषु । तत्र लीनमात्मानं मुक्तमिवावगच्छति । भूयः संसरणकाले संसरति त्रिषु लोकेषु शरीरोत्पत्तिर्भवति । तत्र वैराग्यं निमित्तं प्रकृतिलयो नैमित्तिकः । किं चान्यत्—संसारो राजसाद्भवति रागात् । योऽयं राजसो रागोऽवैराग्यम् यज्ञं करोति दानं ददाति अमुना अमुष्मिन् लोके सुखं मे भावीति । तेन रागेण संसारो भवति । ब्रह्मादिस्थानेषु जन्म भवति । तत्र रागो निमित्तं संसारो नैमित्तिकः । किं चान्यत्—ऐश्वर्यादविघातः यत्पूर्वमैश्वर्यमणिमादिकमष्टविधं निर्दिष्टं तस्मादैश्वर्यात् प्रार्थितानामविघातो भवति न मुक्तिः । अविघातोऽस्खलनम् । विपर्ययात्तद्विपर्यासः । विपर्ययादनैश्वर्यात्तद्विपर्यासः प्रार्थितानामप्राप्तिरित्यर्थः । तत्रानैश्वर्यं निमित्तम् । प्रार्थितस्याप्राप्तिलक्षणो विपर्यासो

नैमित्तिकः । एवं षोडशको नित्यनैमित्तिकप्रसङ्गो व्याख्यातः । प्रकृतिलयः प्रकृतिबन्ध इत्युच्यते । यज्ञादिभिर्दक्षिणाबन्ध इत्युच्यते । ऐश्वर्यादिनिमित्तो भोगो वैकारिक इत्युच्यते ॥ ४५ ॥

ननु निमित्तनैमित्तिकप्रसङ्गः किमात्मक इति ? अत्रोच्यते—

**एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।**
**गुणवैषम्यविमर्देन तस्य भेदास्तु पञ्चाशत् ॥ ४६ ॥**

एष इति । आर्याद्वयेन षोडशविधो नैमित्तिकः सर्ग उक्तः । प्रत्ययसर्ग उच्यते । प्रत्ययात् बुद्धेरुत्पन्नो यस्मात् तस्मात् प्रत्ययसर्ग इत्युच्यते । उक्तं हि पुरस्तात् 'अध्यवसायो बुद्धिः' इत्यादि । सोऽयं प्रत्ययसर्गो भूयश्चतुर्धा भिद्यते । यस्मादाह—विपर्ययाशक्तितुष्टिसिद्ध्याख्यः । संशयबुद्धिर्विपर्ययः स्थाणुरयं पुरुषो वेति । भूयोऽपि स्थाणुं प्रसमीक्ष्य न शक्नोत्यन्तरं गन्तुमेवमस्याशक्तिरुत्पन्ना । ततस्तृतीयः(१) तमेव स्थाणुं ज्ञातुं संशयितुं वा नेच्छति किमनेनास्माकमित्येषा तुष्टिः । भूयश्चतुर्थो (दृष्ट यस्मास्मिन्) स्थाण्वादिरूढां वल्लीं पश्यति शकुनिं वा । ततोऽस्य निश्चय उत्पद्यते स्थाणुरयमित्येषा सिद्धिः । एवमेष प्रत्ययसर्गो भिन्नश्चतुर्धा विपर्ययाशक्तितुष्टिसिद्ध्याख्यः । तस्य चतुर्विधप्रत्ययसर्गस्य गुणवैषम्याविमर्देन पञ्चाशत् भेदा भवन्ति । सत्त्वरजस्तमांसि त्रयो गुणास्तेषां वैषम्यं तद्विमर्देन । यदा सत्त्वमुद्रिक्तं तदा रजस्तमसी गौणे । यथाऽऽदित्योदयान्नक्षत्रतेजसो गौणत्वम् । एवं यदा रजसा सत्त्वतमसी तमसा सत्त्वरजसी गौणे तदा तद्विमर्दो भवति । तेन विमर्देन तस्य चतुर्विधस्य प्रत्ययसर्गस्य पञ्चाशत् भेदा भवन्ति ॥ ४६ ॥

---

(१) विपर्यय इति शेषः ।

तानाह—

**पञ्च विपर्ययभेदा भवन्त्यशक्तेश्च करणवैकल्यात् ।**
**अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥**

सुगमम् ।

विपर्ययस्य च तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति पञ्च भेदाः । तेषां भेदान्तराण्याह—

**भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।**
**तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥**

तमसस्तावदष्टविधा प्रकृतिः । तद्रूस्तु मलयतीति तमः । तस्य परमष्टासु प्रकृतिषु लयो भवति । तद्यथा प्रधानं बुद्धिरहङ्कारः पञ्चतन्मात्राणीत्येतेषु । तत्र लीनमात्मानं मुक्तोऽहमिति मन्यते । स च तस्य विपर्ययः । एवं तमसोऽष्टधा भेदः । मोहस्य च अष्टविध एवेत्यर्थः । यत्तदणिमाद्यष्टविधमैश्वर्यमुक्तं तस्मिन् सक्ता ब्रह्मादयो देवता न मोक्षपदमिच्छन्ति । तस्यैश्वर्यस्य शुभकर्मणोपात्तस्य क्षये पुनः संसरन्ति । अयमष्टविधो मोहस्यापि भेदः । महामोहस्य दशविधो भेदः । देवानां शब्दादयः पञ्चतन्मात्राख्या विषया अविशेषाः केवलानन्दरूपा निरुपाधिदुग्धवच्छान्तादिसंज्ञातसुखादिविरहिता ये भवन्ति स्वर्गप्राप्तौ । एवं मनुष्याणां भौतिकशरीरतया सुखदुःखमोहसम्पन्नाः शान्तघोरमूढा भवन्तीत्येष दशविधो महामोहः । तदेतेषु दशसु ब्रह्मेन्द्रादयो देवा मनुष्याश्च तिर्यग्योन्यासक्ताश्च दृश्यन्ते । ते न हि विषयेभ्यः परमस्तीति मूढविज्ञानास्तदासक्त्या गुणपुरुषान्तरोपलब्धिरूपं नित्यनिरतिशयसुखाभिव्यक्तये ज्ञानावबोधं न कुर्वन्ति इत्यष महामोहः । तेनामी ते मुक्तिं न भजन्ते । तामिस्रोऽष्टादशधेति ।

देवमनुष्याणां दश विषयाः प्रागभिहिता अविशेषसविशेषतया । अणिमाद्यैश्वर्यं चाष्टगुणम् एवमष्टादशधा भवति । तेभ्यः केन चिद्वैगुण्येनाप्राप्त्याऽभिहतस्य यः क्रोधः स तामिस्र इत्युच्यते । तथा अष्टादशधा चेत्यर्थः । अन्धतामिस्रोऽपि भवति तत्सङ्क्षय एव । तथा एवमष्टादशधात्रापि । (१)तेषु च मरणत्रासात् दुःखमुत्पद्यते । ऐश्वर्ये विद्यमान ऐश्वर्यं परित्यज्य मृत्युना ह्रियमाणस्य गच्छामीति सङ्कल्पयतो यस्त्रासः सोऽन्धतामिस्र इत्युच्यते । दश विषयानैश्वर्यं प्राप्यापि भोक्तुं न लभते अन्तरालेऽपि म्रियत इति यावत् । एवममी विपर्ययस्य तमःप्रभृतयः पञ्च भेदा विभिद्यमाना द्विषष्टिभेदाः सञ्जाताः । अत ऊर्ध्वमशक्तेरष्टाविंशतिभेदान् वक्ष्यामः ॥ ४८ ॥

एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥

एकादशेन्द्रियवधाः आन्ध्यबाधिर्यघ्राणपाकजडत्वकुष्ठत्वमूकत्वकुणित्वपङ्गुत्वगुदावर्तक्लैब्योन्मादा इत्येकादशेन्द्रियवधाः । इन्द्रियाणां स्वविषयग्रहणासामर्थ्यं वध इव वधः । यथेह लोके कश्चित् देवदत्तो यज्ञदत्तमाहूय अब्रवीत्—भो दुःखितोऽस्मि किं करवाणीति । स तेनोक्तः साङ्ख्यज्ञानाधिगमं कुरुष्व दुःखान्तमोक्षं प्राप्स्यसीति । एवमुक्तोऽसावाह—नाहमेतदभ्यासं कर्तुमलम् । बाधिर्यात् गुरुवचनं न शृणोमि, शुश्रूषायामसमर्थोऽस्मि । आन्ध्यकुणित्वपङ्गुत्वादिदोषाश्रयत्वात् कुतो मम ज्ञानाधिगम इति । एवमेवान्ध्यमूकत्वोन्मादादय इन्द्रियोपघाता विद्याग्रहणे असमर्था(२) बोद्धव्याः । एवमेते एकादशेन्द्रियवधा अ-

(१) अत्र किञ्चित् त्रुटितं भाति । (२) प्रतिबन्धा इत्युचितम् ।

क्तेरुच्यन्ते। किञ्च–सह बुद्धिवधैरिति। बुद्धेर्वधा बुद्धिवधास्तैः सह। के ते बुद्धिवधाः? सप्तदशसङ्ख्याः। ते च सप्तदशापि–नव तुष्टिभेदा अष्टौ सिद्धयः। तन्निरूपणप्रस्तावे व्याख्यास्यामः॥ ४९॥

तत्र नवधा तुष्टिमाह–

**आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः।**
**बाह्या विषयोपरमात् पञ्च नव च तुष्टयोऽभिहिताः ५०॥**

(१)आत्मन्यधिकृत्य प्रवर्तन्ते ताश्चतस्रस्तुष्टयः। प्रकृतितुष्टिरुपादानतुष्टिः कालतुष्टिः भाग्यतुष्टिश्चेति। यथा कश्चित्प्रकृतिमात्रं वेत्ति न तु जानीते सगुणागुणत्वनित्यानित्यत्वचेतनाचेतनत्वसर्वगतत्वधर्मानस्याः केवलं प्रकृत्यस्तित्वमात्रज्ञानेन अहं जानामीति तुष्टः प्रव्रजितस्तस्य नास्ति मोक्षः। एषा प्रकृतितुष्टिः। कश्चित् त्रिदण्डकुण्डिकाक्षमालाकृष्णाजिनोपादानमात्रेणैवाहं मुक्त इत्यभिमानी ब्रूते। तेन मम मोक्षो भावीति। एतावन्मात्रेण तुष्टो ज्ञानाधिगमे न प्रवर्तते। तस्यापि न मोक्ष इत्येषा उपदानतुष्टिः। कश्चिदेवं ब्रूते कालेन स्वयं मोक्षो भावी किं तत्त्वविज्ञानेनेति। ज्ञाने अप्रवृत्त्यैव तुष्टः। तस्यापि न मोक्ष इति कालतुष्टिः। कश्चिदेव महाभाग्येनैव मुक्तो भवति। तस्मात् ज्ञानमसाधकं मुक्तेः स्यात् इति तावता तुष्टः तस्य न मोक्ष एषा भाग्यतुष्टिः। एवमेता आत्मन्यधिकृत्य जायन्ते इत्याध्यात्मिक्यश्चतस्रस्तुष्टयः। बाह्यास्तु पञ्च तुष्टयः। पञ्चानां विषयाणामुपरमाद्भवन्ति अर्जनरक्षणक्षयातृप्तिहिंसादोषान् भावयतः पञ्च। एवमुभयत्र नव तुष्टयः। तत्रार्जनं नाम विषयाणां

(१) अध्यात्मं भवा आध्यात्मिक्य इति समुचितम्।

तदर्थं कृषिपाशुपाल्यादिव्यवसायदुःखमवधार्य तेभ्य एवोपरतस्तुष्टिं लभते । एषा पञ्चमी तुष्टिः । अर्जितानामपि राजचौरादिभ्यो दुःखं विषयाणां रक्षणं कर्तुं तस्मान्न विषयैः कार्यमित्युपरतस्तुष्टिं लभते सा षष्ठी तुष्टिः । रक्षणेऽपि कृते उपभुज्यमानास्ते क्षीयन्ते इति न तैः कार्यमित्युपरतस्तुष्टिं लभते एषा सप्तमी । तथाऽर्जनक्षयादिप्रतीकारैरपि कृतैर्नास्ति इन्द्रियाणां वैतृष्ण्यम् तस्मान्न तैः कार्यमित्युपरतस्याष्टमी तुष्टिः । भोक्तानां प्रतीकारे कृतेऽपि अर्जनादिप्रवृत्तेन हिंसामन्तरेण भूतापरोधं विनामी न प्राप्यन्ते तस्मान्न तैः कार्यमित्युपरतः तुष्टिं लभते एषा नवमी तुष्टिः । एवमेताः पञ्च बाह्यास्तुष्टयः । उभयं (१)नव भवन्ति । (एवामेताभिस्तुष्टिभिः ज्ञानं विना मोक्षोऽस्तीति केवलेन वैराग्येण तुष्टः ।) आसां नवानामपि तुष्टीनां ग्रन्थान्तरे संज्ञान्तराणि । तद्यथा—अम्भः सलिलम् ओघो वृष्टिः तारं सुतारं सुनेत्रं सुमरीचम् उत्तमाम्भसिकमिति । आसां विपरीता अतुष्टय अनम्भ इत्याद्याः । एवं तुष्ट्यतुष्टयो व्याख्याताः ॥ ५० ॥

इदानीं सिद्धयो व्याख्यायन्ते—

ऊहः शब्दोऽध्ययनं दुःखविघातत्रयं सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥५१॥

तत्र ऊहो नाम यथा कश्चित् चिन्तयति, किं परं याथात्म्यं, किं निःश्रेयसम्, किं कृत्वा सुखं प्राप्यते । एवमस्य चिन्तयतो ज्ञानमुत्पद्यते स्वतः शास्त्रतो गुरुतो वा । यत् प्रधानबुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतान्यन्यानि अहमन्य

(१) मिलित्वेति शेषः ।

इति ततो मोक्षं गच्छति एषा ऊहसिद्धिः प्रथमा । चौरसाधुतदनुगामिस्वामिपथिकसंयोगादिवत् प्रकृतिपुरुषशिष्यगुरुक्रमज्ञानम् । तद्यथा ग्राममाच्छिद्य चौरा यान्ति । तत्सार्थमध्ये साधुरेको गच्छति । तदनुगामी च स्वामी । चतुर्थः पथिकस्तदभिज्ञः । पथिकचौरमध्ये साधुरपि चौरगुणास्पृष्टोऽपि तदनुगामिना चौरतया प्रतीतस्ताद्दग्गणनायां (प्रतीतः)तदभिज्ञेन पथिकेन स्वामी सम्बोधितो यदहं सर्वं जानामि अमी चौरा अयं साधुरेव तत्सार्थानुवर्तीति । एवं चौरस्थानीयो बुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतसमवायः, साधुस्थानीयश्च पुरुषः, तदनुगामिस्थानीयः शिष्यो, भेदेन बोद्धाः । पथिकस्थानीयो गुरुः । तस्माज्ज्ञानं प्रतीकत्रयेणैवावगम्यते—गुरुतः, शास्त्रतः, स्वत इत्यूहासिद्धिः प्रथमोक्ता । शब्दो नाम यथा कस्यचित्पठतः ( तमस्य जनं ) शब्दं श्रुत्वाऽन्यत् प्रधानमन्योऽहमिति तन्मार्गप्रवृत्तिप्रबुद्धो मोक्षं गच्छति एवमेषा द्वितीया सिद्धिः शब्दत उत्पन्ना । कश्चित् गुरूपासनया ततोऽधीत्यावगम्य सकलं ज्ञानमाप्नोति । तृतीयाध्ययनसिद्धिः साङ्ख्यज्ञानमधीत्य सञ्जाता । एवमेतास्तिस्रः सिद्धयः । शेषा व्याख्यायन्ते । दुःखविघातत्रयमिति । यथा कश्चिदादावभिहिताध्यात्मिकादिदुःखत्रयेणाभिभूतोऽस्य प्रतीकाराय ऊहं शब्दमध्ययनं वा प्रतिपद्य ज्ञानमधिगम्य मोक्षं यातीति दुःखविघाताय यत्रोहादित्रयमधिकुरुते तदपि सिद्धित्रयम् । एवं षट् सिद्धयः । कश्चिद्दुर्मेधा गुरोः सकाशात् नावधारयति । तत् केनचित् प्रत्युपकारानपेक्षेण सुहृदा तस्मात् संसारकूपात् उज्जिहीर्षुणा तदनुकूलतया कृपावता सुगमवचोभिर्वैराग्यपूर्वकं गुणपुरुषान्तरोपलब्धिरूपं साङ्ख्यज्ञानमुपदिशता समुद्धृतमालोक्याह भगवान् शास्त्रकारः

सुहृत्प्राप्तिरिति । ते हि सुहृदस्तथोपदिशन्ति सुहृत्तया यथा पाषाणोऽप्यवबुध्यते । उक्तं च–

एष आतुरचित्तानां मात्रास्पर्शेच्छया विभुः ।
भवसिन्धुप्लवो दृष्टो यदाचार्यानुवर्तनम् ॥

एषा सप्तमी सिद्धिः । कश्चिदावाहनसंवाहनभिक्षापात्रवस्त्रच्छत्रकमण्डलुप्रभृतिदानेन गुरूनाराध्य साङ्ख्यमधिगम्य मोक्षं गच्छतीत्येषाऽष्टमी सिद्धिः दानादिभिरुपायैर्निष्पन्ना । आसामष्टानां पूर्ववन्नामान्तराणि । तारं सुतारं तारतारं प्रमोदं प्रमुदितं मोहनं रम्यकं सदाप्रमुदितमिति । विपरीता असिद्धयः । तद्यथा अतारामित्याद्याः । ततश्च एकादशेन्द्रियवधा, नवानां तुष्टीनां विपर्ययाः प्रकृत्युपादानकालभाग्याख्यानां पञ्चविषयोपरमतुष्टीनां च । अष्टानां सिद्धीनां विपर्यया अनूहादयः । सप्तदश वधा बुद्धेरेवमेकादश सप्तदश चाष्टाविंशतिभेदा अशक्तेरभिधीयन्ते । एवं विपर्ययाशक्तितुष्टिसिद्धीनामुद्देशः(१) कृत इति वाक्यशेषः । **सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ।** या ऊहाद्या अष्टधा सिद्धिस्तस्याः पूर्वो विपर्ययाशक्तितुष्टिरूपो ऽङ्कुशो नियामकः । त्रिविधस्त्रिप्रकार इत्यर्थः । यथा अङ्कुशेन गृहीतो गजो वश्यो भवति । एवं विपर्ययाशक्तितुष्टिरूपं त्रिविधं प्रत्ययसर्गं हित्वा सिद्धिः संसेव्या सिद्धेस्तत्त्वज्ञानं तस्माच्च मोक्ष इति तात्पर्यम् ॥ ५१ ॥

अत्राह–भगवता उक्तं पूर्वस्यामार्यायां भावैरधिवासितं लिङ्गं संसरति । तत्र किं लिङ्गं पूर्वोत्पन्नम् आहोश्वित् भावा इत्यत्रोच्यते–लिङ्गं तावत्सूक्ष्मं तान्मात्रिकं शरीरमनादिकालोत्पन्नं त्रयोदशविधेन करणेन संयुक्तं भावैरधिवासितं संसरति ।

(१) अत्र निर्देश इति पाठोऽधिकोऽपेक्षितः ।

करणानि बुद्ध्यहङ्कारमनोबुद्धिकर्माख्यानि त्रयोदश। एवं त्रयोदशविधकरणमाश्रित्य सूक्ष्मशरीरं तान्मात्रिकं संसरति। शरीरं करणानि च एतल्लिङ्गमित्यत्रोच्यते। भावैरधिवासितमिति भावा धर्मज्ञानवैराग्यैश्वर्याणि चत्वारः सात्त्विकाः। विपरीतास्तामसाः। एवमष्टौ भावाः। तत्र सन्देहः। किं लिङ्गं पूर्वोत्पन्नम् उतस्वित् भावा इति। उच्यते—

**न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।**
**लिङ्गाख्यो भावाख्यस्तस्माद्भवति द्विधा सर्गः॥५२॥**

लिङ्गेन विना भावो न भवति भावैश्च विना लिङ्गं न भवति। यथाऽग्निना विना नोष्णत्वमुष्णत्वं विना नाग्निः। एवमेतयोर्लिङ्गभावयोर्युगपदुत्पत्तिः। गोविषाणवत्, कुमारीस्तनवत्। यत्र लिङ्गं तत्र भावा यत्र भावास्तत्र लिङ्गम्। तस्मादुच्यते–लिङ्गाख्यो भावाख्यः। लिङ्गेन आख्यायते स लिङ्गाख्यः। भावैराख्यायत इति भावाख्यः। तस्मात् द्विधा सर्गो भवति जायते॥ ५२॥

अत्राह–किं द्विविध एव सर्गः किं तस्मादन्यस्तृतीयोऽप्यस्ति इति। अत्रोच्यते—

**अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।**
**मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥ ५३॥**

**अष्टविकल्पो दैव इति**। तद्यथा–ब्राह्मं प्राजापत्यम् ऐन्द्रं पैत्रं गान्धर्वं याक्षं राक्षसं पैशाचमित्येवमष्टविधो देवसर्गः। **तैर्यग्योनश्च पञ्चधा भवति**। अत्र तुल्यलिङ्गत्वाद्भवति पशुपक्षिमृगसरीसृपस्थावरान्तश्च इति। मानुष्य एकविधस्तुल्यलिङ्गत्वात् ब्राह्मणादिचाण्डालान्तः। **समासतः** सङ्क्षेपेण

त्रिविधोऽयं भूतमयः सर्गः। एवं चतुर्दशविधः ॥ ५३ ॥

अत्राह—एतेषु त्रिषु स्थानेषु कतरो गुण उत्कटत्वेन वर्तते

**ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥**

ऊर्ध्वमिति। ब्रह्मादिपिशाचान्तो योऽष्टविधः सर्गः। असौ सत्त्वबहुलः। यस्मात्तेषु सत्त्वमुत्कटत्वेन वर्तते। तत्रापि रजस्तमसी स्तः किं तु सत्त्वस्योद्रिक्तता। तस्मात्सुखप्राया देवाः। तमोविशालश्च मूलतः पश्वादिषु तमस उद्रेकात् पश्वादिस्थावरपर्यन्तः(१) यस्मात्तेषु तम उत्कटत्वेन वर्तते तत्रापि गौणतया सत्त्वरजसी स्तः। तस्मात्ते तमोबहुलाः। मध्ये रजोविशालः। तत्रापि सत्त्वतमसी स्तः। किंतु रज उत्कटत्वेन वर्तते। तस्मात्ते दुःखप्राया मनुष्याः। ब्रह्मादिस्तम्बपर्यन्तः चतुर्विंध एष स्वेदजाण्डजादिना भूतसर्गः ॥ ५४ ॥

अत्राह—भूतसर्ग उत्पन्नो भावसर्गः सम्पन्नो लिङ्गसर्गः सम्पन्न इति यत्र सर्गाः प्राधानिका इति प्रधानकार्यं समाप्तमिति। उत्पन्नास्त्रयो लोकाः प्रधानं चोपरतमुत्पाद्य लोकान् इति तेषु देवमनुष्यतिर्यग्योनिगतेषु दुःखं कोऽनुभवति। किं चतुर्विंशतितमं प्रधानम्, आहोस्वित् महदादित्रयोविंशतिकम्, उतस्वित्पुरुष इति? अत्रोच्यते—

**अत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।**
**लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं समासेन ॥ ५५ ॥**

अत्र त्रिषु लोकेष्विति। देवलोके मनुष्यलोके तिर्यग्योनौ

---

(१) अत्र 'तमोबहुल' इत्यधिकमपेक्षितम्।

च जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः । तत्र जराकृतं वलीपालितैरभिभूतः कासश्वासैः परिगृहीतो यष्टिविष्टम्भगामी पुत्रस्नुषाद्यभिभूतो यद्दुःखमनुभवति तज्जराकृतम् । मरणकृतमिति । अष्टविधमैश्वर्यमास्ते यत्प्रागभिहितमणिमादि, दश विषयाः सन्ति । देवानां पञ्चाविशेषाः केवलसुखरूपाः । मनुष्याणां सविशेषास्त एव शब्दादयः सुखदुःखमोहसम्पन्नाः तन्मरणपातावस्थायां यद्दुःखमुत्पद्यते तन्मरणकृतमित्येव । एवमेतैर्दुःखैरन्तकाले च जनितदुःखानि सर्वाणि प्राप्नोति चेतनः पुरुष एव प्रधानादीनामचेतनत्वात् । तस्मात्तस्यैव विज्ञानितया दुःखं न तु जडानां प्रधानादीनाम् । तर्हि कियन्तं कालं पुरुषो दुःखमाप्नोति । अत्रोच्यते—लिङ्गस्याविनिवृत्तेः यावन्महदादि लिङ्गं न निवर्तते तावत्कालं पुरुषो दुःखभोक्ता । तस्माद्दुःखं समासेन—सङ्क्षेपेण प्राप्नोति चेतनः पुरुषः । यदा तु तत्प्रतिनिवर्तते महदादिलिङ्गं ज्ञानोत्पत्त्या ततो मोक्षं प्राप्नोति । मोक्षं गतस्य दुःखं नास्ति । ज्ञानेन हि लिङ्गं निवर्तते । यदा प्रत्येकं प्रधानमहदहंतन्मात्रेन्द्रियभूतान्यन्यानि अहमन्य इति ज्ञानं तदा लिङ्गाभावः ॥ ५५ ॥

प्रकृतेः किं निमित्तमारम्भ इत्यत्रोच्यते—

इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥५६॥

इत्येष प्रकृतिकृत इति । एवमादिर्यः पूर्वमुपवर्णितो लिङ्गसर्गो महदादिभूतपर्यन्तः, एष प्रकृतिकृत इति । अत्राह- एवं लिङ्गसर्गः प्रधानेन किमर्थं कृत इति ? अत्रोच्यते । प्रतिपुरुषविमोक्षार्थम् पुरुषं पुरुषं प्रति विमोक्षस्तदर्थं प्रतिपुरुषविमोक्षा-

र्थम् । देवलोकगतानां मनुष्यलोकगतानां तिर्यग्योनिगतानां च मोक्षार्थमित्यर्थः। स्वार्थ इव परार्थ आरम्भः । स्वकीयोऽर्थः स्वार्थः । इवोपमायाम् । यथा कश्चित् स्वार्थमिव मित्रार्थं करोति तथा स्वार्थमिव प्रधानं पुरुषार्थं करोति । स चार्थो द्विविधः । शब्दाद्युपलब्धिरादिर्गुणपुरुषान्तरोपलब्धिरन्तश्च । त्रिषु लोकेषु शब्दादिविषयैः पुरुषं योजयति । अन्ते च गुणपुरुषान्तरोपलब्ध्या मोक्षं कुरुते ॥ ५६ ॥

अत्राह—उक्तं भगवता प्रधानं स्वार्थमिव परार्थमारभते । अथ च त्वया प्रधानमचेतनमुक्तं तत्कथं प्रवर्तते । (१)अचेतनानामपि प्रवृत्तिर्दृष्टा निवृत्तिश्च ।

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥**

यथा तृणोदकं गवा भक्षितं पीतं च क्षीरभावेन परिणमति, वत्सवृद्धिं करोति, पुष्टे वत्से निवर्तते । एवं पुरुषविमोक्षनिमित्तं प्रधानस्याज्ञस्य प्रवृत्तिः ॥ ५७ ॥

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।**
**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥**

यथा लोक इष्टविषयौत्सुक्ये सति तस्य निवृत्त्यर्थं क्रियासु गमनागमनासु प्रवर्तते कृतकार्यो निवर्तते । तथाऽव्यक्तं पुरुषस्य विमोक्षार्थं शब्दादिभोगलक्षणं गुणपुरुषान्तरोपलब्धिलक्षणं द्विविधं पुरुषार्थं कृत्वा निवर्तते ॥ ५८ ॥

किञ्चान्यत्—

---

(१) अत्र 'उच्यते' इत्यपेक्षितम् ।

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।**
**पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥५९॥**

यथा नर्तकी शृङ्गारादिरसैर्हावभावैश्च निबद्धगीतकादित्रनृत्यानि रङ्गस्य दर्शयित्वा कृतकार्या नृत्तान्निवर्तते । एवं प्रकृतिर्महदहङ्कारतन्मात्रेन्द्रियभूतभावेन देवमानुषतिर्यग्रूपासु योनिषु सुखदुःखमोहाकृतिः शान्तघोरमूढविषया सती आत्मानं पुरुषस्य प्रकाश्य निवर्तते । तस्यां च निवृत्तायामसौ केवलः पुरुषो दुःखत्रयं नानुभवति । यथा जलवाहकस्य घटाभावे तदाधेयस्योदकस्याभावः । तथा दुःखाभावः । ततोऽसौ मोक्षं गच्छति ॥५९॥

अत्राह—यथा नर्तकी नृत्यादिभिरुपायैरात्मानं प्रकाश्य रङ्गात् विनिवर्तते, एवं प्रकृतिः पुरुषस्य कैरुपायैरात्मानं प्रकाश्य विनिवर्तते ? अत्रोच्यते—

**नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।**
**गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥ ६० ॥**

नानाविधैरुपायैः शब्दस्पर्शादिभिरुपकर्तुं शीलमस्याः सा तथोक्ता । अनुपकारिणः पुंसः निष्क्रियत्वादिति यावत् । तस्योपकारिणी प्रकृतिः तस्योपकृत्याहमन्या त्वमन्य इति निवर्तते (प्रकृतिः) । किं चान्यत्—गुणवती सा सत्त्वरजस्तमोमयी । अगुणस्य सतः पुंसः निष्क्रियोदासीनामूर्तादिलक्षणवत्त्वात् । एवमस्य पुंसोऽगुणस्यापि सतः (नित्यस्य) सेयं गुणवती अर्थमपार्थकं चरति करोति । यथा कश्चिदनुरक्तो मित्रसुहृत्त्वमवलम्ब्य मित्रार्थमनुक्तमपि प्रत्युपकारमनपेक्ष्य कुरुते । एवं प्रधानं पुरुषस्य द्विविधमपि विषयोपलब्धिमोक्षात्मकमर्थं कुरुते । पुमान् पुनः प्रधानस्य किमपि न प्रत्युप-

करोति । तत् प्रधानपुंसोः शिखिपिच्छवदेकपक्षाचित्रन्यायः ॥६०॥

निवृत्ता किं करोति एतदाह—

**प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।**
**या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥**

प्रकृतिरपि प्रधानमपि कुरुते । यथेह स्नुषा व्रीडया स्वगृहान्तः प्रविशति अतो ब्रवीति इयं विशिष्टतरेति । एवमियं प्रकृतिः सुकुमारतरा । तस्मात्प्रकृतेः सुकुमारतरं नान्यदस्तीति । एवं पुरुषस्य परमात्मनोऽपि मतिरुत्पन्ना । नास्तीति मे मतिर्भवति । ममेति पुरुष आत्मानं ब्रवीति । तत्र सुकुमारतरत्वं वर्णयति ईश्वरः कारणमिति केचिदाचार्या ब्रुवते । उक्तं च—

"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव वा ॥

वेदवादिनः पुनरित्थं कारणमाहुः । 'पुरुष एवेदं सर्वम्' इत्यतः पुरुषः कारणमाहुः । अपरे स्वभावमाहुः । स्वभावः कारणमिति । तथा हि—

येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।
मयूराश्चित्रिता येन स नो वृत्तिं विधास्यति ॥

अत्र साङ्ख्या वदन्ति । ईश्वरः कारणं न भवति । कस्मात् निर्गुणत्वात् । इमाः सगुणाः प्रजाः । सत्त्वरजस्तमांसि त्रयो गुणाः ते च प्रजासु सन्ति । तांश्च गुणान् दृष्ट्वा साधयामः । प्रकृतेरिमाः समुत्पन्नाः प्रजाः । यदीश्वरः कारणं स्यात्ततो निर्गुणादीश्वरान्निर्गुणा एव प्रजाः स्युः । न चैवम् । तस्मादीश्वरः कारणं न भवति । एवं पुरुषोऽपि द्रष्टव्यः । स्वभावो नाम न कश्चित्पदार्थोऽस्ति । यतः प्रजानामुत्पत्तिसङ्गतिः स्यात् । तस्मा-

द्यो ब्रूते स्वभावः कारणमिति तन्मिथ्या । केचित् कालं कारणतया वर्णयन्ति ।

काल: सृजति भूतानि काल: संहरते प्रजाः ।
काल: सुप्तेषु जागर्ति तस्मात्कालस्तु कारणम् ॥

तदपि साङ्ख्यो निराकुरुते । कालो नाम न कश्चित्पदार्थोऽस्ति । व्यक्तमव्यक्तं पुरुष इति त्रय एव पदार्थाः । तत्र कालोऽन्तर्भूतः । एवं प्रधानं हित्वा नास्त्यन्यत् कारणम् । तत्प्रधानावगमं प्रति यदा पुरुषस्य सम्यग् ज्ञानमुत्पद्यते तदा तेन ज्ञानेन दृष्टा प्रकृतिः पुरुषसङ्गान्निवर्तते । स्वैरिणीव पुरुषेणोपलक्षिता । अये इयमसाध्वी मां मोहयति तस्मान्न ममानया कार्यमितिवत् । तस्यां च निवृत्तायां मोक्षं गच्छति । एवमीश्वरादीनि अकारणानि । सुकुमारतरम् इत्येतत् वाक्यशेषःकृतः । यस्मात्सुकुमारतरं प्रधानं तस्मादुच्यते–प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति इति मे पुरुषस्य । अत्राह- सा दृष्टा पुरुषेण कथं निवर्तते प्रकृतिः । अत्रोच्यते–यादृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य । यथा काचित्कुलस्त्री साध्वी स्वगृहद्वारि स्थिता पुरुषेण सहसैवागतेन दृष्टा सहसैवं व्रीडमाना त्वरितं गृहं प्रविष्टा सा एवं मत्वा दृष्टाऽहमनेनेति न पुनर्दर्शनमुपैति पुरुषस्य । एवं प्रकृतिः परमात्मना पुरुषेण ज्ञानचक्षुषा दृष्टा सव्रीडा कुलस्त्रीवन्न पुनर्दर्शनमुपैति पुरुषस्य । तस्यां च निवृत्तायां पुरुषो मोक्षं गच्छति ॥ ६१ ॥

अत्राह– लोके शिष्टा वदन्ति पुरुषो बद्धः, पुरुषो मुक्तः, पुरुषः संसरति । अत्रोच्यते —

**तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥**

पुरुषो न बध्यते सर्वगतत्वात्, अविकारत्वात्, निष्क्रियत्वात्, अकर्तृत्वात्। यस्मान्न बध्यते तस्मान्न मुच्यते। मुक्त एव सः। अबद्धः कुतो मुच्यते। कस्याभुक्तेन विशूची भवति। न संसरति सर्वगतत्वात्। सर्वगतस्य बन्धमोक्षौ कुतः। अनधिगतप्रापणार्थं संसरणमित्युपादिश्यते। तेन च सुनिपुणं सर्वं प्राप्तम्। पुरुषं न विदन्ति ये त एवं वदन्ति। पुरुषो बद्धः पुरुषो मुक्तः पुरुषः संसरति। अत्राह—यदि पुंसो बन्धमोक्षसंसरणानि न स्युः तर्हि कस्य भवन्ति। तदुच्यते—**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः**। प्रकृतिरात्मानं बध्नाति, मोचयति, संसरति च। यत्तत्सर्गादौ सूक्ष्मं शरीरं तान्मात्रिकं प्रागुक्तं त्रयोदशविधेन करणेन संयुक्तं त्रिविधेन बन्धेन बद्धं संसरति। स च बन्धस्त्रिविधः पूर्वमाख्यातः(१)। तदेव सूक्ष्मशरीरमुत्पन्ने ज्ञाने त्रिधा बन्धान्मुच्यते। तस्मान्मुच्यते बध्यते संसरति नानाश्रया प्रकृतिः। नानाश्रया देवमनुष्यतिर्यक्शरीरभूतेत्यर्थः। एवं यत् प्रधानं तत् सूक्ष्मं शरीरं तत् प्रधानं प्रकृतिरित्यनर्थान्तरम्। तत्र यः पुंसो बन्धमोक्षसंसरणानि ब्रूते स मूढः॥ ६२॥

अत्राह—सा प्रकृतिः कैर्गुणैरात्मानं बन्धयति, कैर्वा मोचयतीति? अत्रोच्यते—

**रूपैः सप्तभिरेवं बध्नात्यात्मानमात्मना प्रकृतिः।**
**सैव च पुरुषस्यार्थं प्रति विमोचयत्येकरूपेण॥ ६३॥**

**सप्तभी रूपैरियमेवं प्रकृतिर्धर्मादिभिर्विना ज्ञानम् आत्म-**

(१) प्रकृतिबन्धो वैकारिकबन्धो दाक्षिणाबन्धः। प्राकृतेन च बन्धेन तथा वैकारिकेण च। दाक्षिणेन तृतीयेन बद्धो ज्ञानेन मुच्यते।

नाऽऽत्मानं बध्नाति । सैव च प्रकृतिः गुणपुरुषान्तरोपल-
ब्धिरूपं प्रति एकरूपेण ज्ञानेनात्मानं विमोचयति ॥ ६३ ॥

कथं तत् ज्ञानमुत्पद्यते—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

एवमिति । यथा एतानि पञ्चविंशतितत्त्वानि पुरुषाद्यानि भूतपर्यन्तानि तेषामभ्यासस्तत्त्वाभ्यासः । अभ्यासेनैव तत्त्वदर्शनम् । तस्मादभ्यासात् पुरुषस्य बुद्धिरुत्पद्यते । नास्मि तत्त्वानि, न मे तत्त्वानि, नाहं तत्त्वानां, किं तु प्राधानिकान्येतानि । तस्मात् ज्ञानमुत्पद्यते एवमादि । अपरिशेषं निरवशेषमित्यर्थः(१) । किं चान्यत् (ज्ञानं यस्मादाह)—अविपर्ययात् । विपर्ययः संशयस्तद्विपरीतोऽविपर्ययस्तस्मादविपर्ययादसंशयाद्यथाभूतार्थदर्शनाद्विशुद्धम् निरवद्यमव्यामिश्रं केवलं(२) ज्ञानमुत्पद्यते प्रादुर्भवति । किं ज्ञानम् गुणपुरुषान्तरोपलब्धिरूपमित्यर्थः ॥ ६४ ॥

अत्राह—तेन ज्ञानेन पुरुषः किं करोति । अत्रोच्यते—

तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥६५॥

यथा कश्चित्प्रेक्षको रङ्गस्थितो गीतवादित्रनृत्यादिभिर्वर्तमानां नर्तकीं स्वस्थो निर्विकल्पः पश्यति । एवं पुरुष आत्मकृतेन ज्ञानेन तासु तासु अवस्थासु वर्तमानां प्रकृतिं पश्यति इयं सा प्रकृतिर्या सर्वपुराणमात्मानं बध्नाति । प्रे-

(१) न मे शरीरं यतोऽहमन्यः शरीररमन्यत् नाहम् इत्यपरिशेषम् अहङ्काररहितम् ।

( २ ) मोक्षकारणं पञ्चविंशतितत्त्वज्ञानं ।

क्षकवत् प्रेक्षकेण तुल्यः स्वस्थः स्वस्मिन् भावे स्थितः। किं भूतां प्रकृतिम् निवृत्तप्रसवाम् । निवृत्तबुद्ध्यहङ्कारकार्याम्। अर्थवशात्सप्तरूपाविनिवृत्ताम्। निर्वर्तितोभयपुरुषप्रयोजनवशात् यैः सप्तभिः रूपैर्धर्मादिभिरात्मानं बध्नाति तेभ्यो रूपेभ्यो विनिवृत्ताम् । यावज्ज्ञानचक्षुषा दृष्टा प्रकृतिः पुरुषेण तया च पुमान् दृष्टः ॥ ६५ ॥

अत्राह—ज्ञानचक्षुषा दृष्ट्वा प्रकृतिं पुरुषः किं करोति । अत्रोच्यते—

दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरतान्या ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥६६॥

यथेमां रङ्गगतां नर्तकीं सर्वास्ववस्थासु वर्तमानां दृष्ट्वा विरमति रङ्गात् प्रेक्षकः दृष्टा मयेत्युपेक्षक एकः केवलः शुद्ध पुरुषः। तथा प्रकृतिरपि अनेन अहं दृष्टेति निवृत्ता। एका त्रैलोक्यस्यापि प्रधानकारणभूता न द्वितीया प्रकृतिरस्ति। नर्तक्यपि अहमनेन दृष्टा इत्युपरमते नृत्यात् एवं पुरुषोऽपि दृष्टामया इयं ज्ञानचक्षुषा प्रकृतिः इति प्रेक्षकवत् उपरमते मोक्षं गच्छतीत्यर्थः। तथा प्रकृतिरपि दृष्टाऽहमनेनेति स्वव्यापारात् उपरमत्येव। अत्राह—पुंप्रकृत्योः सर्वगतत्वात् सर्वनिषेधो न शक्यते वक्तुम्। तदस्य संसारसर्गस्य विनिवृत्तिरेव । तत्कथमिदं साधनं समीचीनमिति। अत्रोच्यते—सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्येति । यद्यपि प्रधानपुरुषयोः सर्वगतयोः संयोगो भवत्येव। तस्मिंश्च सति सर्गसम्भवस्तथाऽपि नासौ सर्गः स्यात् प्रयोजनाभावात्। यस्मात् प्रधानस्य पुरुषार्था प्रवृत्तिः। स च पुरुषार्थो द्विविधः । शब्दाद्युपलब्धिरादिर्गुण-

पुरुषान्तरोपलब्धिरन्तश्च । ब्रह्मादिस्थावरान्तेषु पुरुषः शब्दादिभिर्विषयैर्योजयितव्यः । अन्ते च गुणपुरुषान्तरोपलब्ध्या मोक्षयितव्यः । एवं पुरुषदर्शनार्थं सम्प्रयोगः कृतः । एवं प्रकृतिपुरुषयोस्तयोः शरीरोत्पत्तिर्नास्ति पुनः ऋणिकधारिणकवत्(१) यथेह लोके ऋणिकधारिणकौ उत्तमाधमर्णौ देवदत्तयज्ञदत्तौ योऽस्मिन् ऋणं धारयति स उत्तमर्णस्तेनाधमर्ण उक्तः ऋणं मे देहीति । ततस्तेन तद्दत्तं । ततस्तौ कृतप्रयोजनौ परस्परमर्थेन सन्त्यक्तावथ तयोर्भूयः संयोगो भवति । तथाऽपि नार्थकृत्यं प्रयोजनाभावात् । यथा वा वृद्धसंयोगादपत्यं न भवति प्रयोजनाभावात् । तथा प्रधानपुरुषयोः कृतप्रयोजनयोः प्रयोजनं नास्तीति सिद्धम् ॥ ६६ ॥

किंचान्यत् यदि पुरुषस्य उत्पन्ने ज्ञाने मोक्षस्तर्हि मम कस्मान्न भवति । अत उच्यते—

**सम्यक्ज्ञानाधिगमात् धर्मादीनामकारणप्राप्तौ ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः ॥ ६७॥**

यदा पुरुषेण पञ्चविंशतितत्त्वज्ञानमधिगतं भवति तदा धर्मादीन्यकारणानि प्राप्तानि पुनर्जन्मसमर्थानि न भवन्ति । को दृष्टान्तः यथेह लोके बीजान्यग्निदग्धानि न प्ररोहसमर्थानि भवन्ति । धर्मो येषाम् आदिस्तानि धर्मादीनि तेषाम् अकारणानां प्राप्तिरकारणप्राप्तिः । तथा सत्यां पुनर्जन्म न भवति । अत्राह यदि सम्यक् ज्ञानात् मोक्षो भवति तत्राचार्यस्योपदेष्टुः सम्यक् ज्ञानमुत्पन्नं किमर्थं मोक्षं न गतोऽस्ति अथ वा त्वत्प्रसादात्तत् ज्ञानं ममापि सञ्जातं किमहं मोक्षं न गच्छामि । अत्रोच्यते—तिष्ठति

(१) ऋणिकधनिकवत् इति पाठः समुचितः ।

संस्कारवशात् । संस्कारो नाम धर्माधर्मौ निमित्तं कृत्वा शरीरोत्पत्तिर्भवति तिर्यङ्मनुष्यदेवादिषु । तस्य संस्कारेण ग्रहणम् । स च संस्कारः फलमदत्त्वा क्षयं न गच्छति उत्पन्नज्ञानस्यापि तस्मादिदं शरीरं विनाशं यास्यति । तन्निमित्ताभावादिदं शरीरं पतिष्यति । यथा च विद्वान् मोक्षं यास्यति । तस्मात् हेतोरुत्पन्नज्ञानस्यापि धर्माधर्मवशात् तिष्ठति शरीरम् । को दृष्टान्तः ? अत्रोच्यते—चक्रभ्रमवत् धृतशरीरः यथा कुलालश्चक्रं भ्रमयति घटं करिष्यामीति । स कुलालो घटं कृत्वा यथा स्वस्थो भवति अवतिष्ठते । यस्मिंश्चावतिष्ठमाने चक्रं भ्रमत्येव । संस्कारवशात्—कर्मवशादित्यर्थः । एवमेव पूर्वकृतयोर्धर्माधर्मयोर्बलवत्त्वात् दुर्बलत्वात् ज्ञानस्य उत्पन्नेऽपि ज्ञाने विद्वांस्तिष्ठति संस्कारवशात् चक्रभ्रमवत् धृतशरीरः ॥ ६७ ॥

अत्राह—उत्पन्नज्ञानः फलनिरपेक्षं कर्म निर्बीजं कुर्वन्न देहमारभते, आरब्धफलं यावत् जन्मदायि 'नाभुक्तं क्षीयते कर्म' 'अवश्यमेव भोक्तव्यं कृतम्' इति क्षपयन्, अनारब्धफलेषु 'यथैधांसि समिद्धोऽग्निः' इति परिहारेण भस्मीकरणम् । एवं कर्मणां ध्वंसे उत्पन्ने ज्ञानेऽपि कदा विद्वान् मोक्षं गच्छतीति ? अत्रोच्यते—

प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥

तदेवं सति शरीरभेदे देहनाशे प्राप्ते आयाते इत्यर्थः । चरितार्थत्वात् । स चार्थो द्विविधः (शाब्दात्मिकः) पूर्वमुक्तः । तस्यार्थस्य चरितार्थत्वात् कृत्वेत्यर्थः । प्रधानविनिवृत्तौ । यदा पूर्वकृतयोर्धर्माधर्मयोः क्षयो भवति तदा शरीरं भिद्यते । तस्मिंश्च शरीरे भिन्ने पूर्वोक्तेन ज्ञानेन शरीरं प्रधानाख्यं कारणमाविशे-

अतिसङ्क्षिप्तम् । तदाह—

**शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्याभिः ।**
**सङ्क्षिप्तमार्यमतिना सम्यक् विज्ञाय सिद्धान्तम् ॥७१॥**

शिष्यपरम्परयागतमिति । कपिलादासुरिणा प्राप्तमिदं ज्ञानम् । ततः पञ्चशिखेन, तस्मात् भार्गवोलूकवाल्मीकिहारीतदेवलप्रभृतीनागतम् । ततस्तेभ्य ईश्वरकृष्णेन प्राप्तम् । तदेव षष्टितन्त्रम् आर्याभिः सङ्क्षिप्तम् आर्यमतिना विस्तीर्णमतिना सम्यक् विज्ञाय सिद्धान्तम् कार्यकारणसिद्धस्य शरीरस्यान्तोऽपुनर्भावो मोक्षस्तस्य तादात्म्यामित्यर्थः । तत्सिद्धस्य शरीरस्य सूक्ष्मस्य तान्मात्रिकस्य सर्गादिभवस्यान्तो मूर्तिनाश इति वा । एष षष्टितन्त्र इति तात्पर्यम् ॥ ७१ ॥

**सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।**
**आख्यायिकाविरहिताः परवादविवर्जिताश्चेति ॥७२॥**

ये षष्टितन्त्रे पदार्था अभिहितास्ते सप्तत्यां व्याख्याताः कथिताः । षष्टिभेदाः प्राक् व्याख्याताः । 'भेदस्तमसोऽष्टविध' इति आर्यायां 'पञ्च विपर्ययभेदा' इत्यत्र चाभिहिता इत्येते पञ्चाशत् प्रत्ययाः । इमे चान्ये दश मौलिकाः । तथा हि—

(१)अस्तित्वमेकत्वमथार्थवत्त्वं पारार्थ्यमन्यत्वमथो निवृत्तिः ।*
योगो वियोगो बहवः पुमांसः स्थितिः शरीरस्य विशेषवृत्तिः॥

तत्र 'भेदानां परिमाणात्' इत्येतैः पञ्चभिर्हेतुभिः प्रधानास्ति-

---

( १ ) अत्र एकत्वार्थवत्त्वपरार्थत्वानि प्रधानगतानि, अन्यत्वाकर्तृत्वबहुत्वानि पुरुषगतानि, अस्तित्वयोगवियोगा उभयगताः । स्थितिः शरीरस्य शेषगता वृत्तिः स्थूलसूक्ष्मगता । इत्यवधेयम् ।

* प्रथोनिवृत्तिरित्यस्य स्थाने प्रकर्तृताच इति पाठः समुचितः ।

त्वमेकत्वमर्थवत्त्वं च सिद्धम् । 'सङ्घातपरार्थत्वात्' इति परार्थत्वमुक्तम् । 'जन्ममरणकरणानाम्' इति पुरुषबहुत्वं सिद्धम् । 'चक्रभ्रमवत् धृतशरीर' इतिस्थितिः सिद्धा, एते दश, 'पञ्च विपर्यया:' अष्टाविंशतिधा अशक्तिः, नवधा तुष्टिः अष्टधा सिद्धिरिति पञ्चाशत् । उभयं मिलत्वा षष्टिपदार्थाः षष्टितन्त्रे । तन्त्र्यन्ते व्युत्पाद्यन्ते पदार्था इति तन्त्रम् । षाष्टिपदार्थानां तन्त्रमिति सङ्गतिः । आख्यायिकाविरहिताः परवादविवर्जिताश्चेति । परेण सहवादः परवादः तेन वर्जिताश्च । इति परिसमाप्तमिति ॥ ७२ ॥

अत्राह—कथमेतदल्पग्रन्थं शास्त्रं कृत्स्नस्य वाचकं भविष्यति ? अत्रोच्यते—

**तस्मात्समासदृष्टं शास्त्रमिदं नार्थतश्च परिहीनम् ।**
**तन्त्रस्य च बृहन्मूर्तेर्दर्पणसङ्क्रान्तमिव बिम्बम् ॥७३॥**

यस्मात् षष्टितन्त्रं(१)इति हेतुः। समासदृष्टं सङ्क्षेपतो ग्रन्थमित्यर्थः। शास्त्रमिति । शास्यते येनोत्पथादिति शास्त्रम् । तीर्थोदकमहत्फलम् । कर्ता भोक्ता भोज्यं मोक्षश्चात्र चिन्त्यते । अथ दुःखानां शासनात् शास्त्रम् । इदम्—इमां सप्ततिं दर्शयति । नार्थतश्च परिहीनम् । षष्टिपदार्थविचारणायामहीनमित्यर्थः । तन्त्रस्येति । यथा स्वल्पेऽपि दर्पणे महतो रूपस्य निरूपणं स्यात् । एवमल्पशास्त्रे षाष्टितन्त्रस्य कृत्स्नस्यापि व्यक्तिरभिहितेत्यर्थः ॥ ७३ ॥

इत्याचार्य ईश्वरकृष्णप्रोक्तायाः साङ्ख्यसप्तत्या वृत्तिराचार्यमाठरकृतिः समाप्ता ।

---

(१) बृहत् तस्मात् इत्यपेक्षितम् ।

# चौखम्बासंस्कृतसीरीज़

१ अस्यां चौखम्बा– संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था इहाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापका पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादि-कार्यकारिणो भवन्ति ।

४ भारतवर्षीयै, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः १० आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकं ... . ... ... ” ” १ ” ८

६ प्रापणव्ययं पृथग् नास्ति । ... . . ...

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता ख० २ ३)

(२) शब्दकौस्तुभ । भट्टोजिदीक्षितकृत प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् ३३)

(३) श्लोकवार्तिकं भट्टकुमारिलविरचितं पार्थसारथि-मिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १५)

भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचित-भाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्त ) ३)

(५) करणप्रकाश । श्रीब्रह्मदेवविरचित १॥)

(६) भाट्टचिन्तामणि । महामहोपाध्यायश्रीगागाभट्टविर-चित तर्कपाद (मीमांसा) ३)

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा ३)

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीतवेदान्तसूत्रस्य भिक्षु-श्रीमद्विज्ञानभिक्षुकृतव्याख्यान। सम्पूर्णम्। (वेदान्त )९)

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा । ३)

(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृता परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । २॥)

(११) न्यायमकरन्द । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीत । आचार्यचित्सुखमुनिविरचितव्याख्योपेत ( वेदान्त ) ६)

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिवि स्तृतविचाररूप म० म० श्रीगिरिधरोपाध्यायविरचि त सम्पूर्ण ( न्याय ) ॥)

(१३) विधिरसायनम् । श्रीमदप्पय्यदीक्षितकृत सम्पूर्णम् ३)

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । ( मीमांसा ) २४)

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता श्रीक्षेमराजविर-चितवृत्तिसमेता ( वेदान्त ) ३)

(१६) मीमांसाबालप्रकाश । जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मजभट्टशङ्करविरचित । (मीमांसा) ३)

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि–मीमांसादर्शनम् । महामहोपाध्यायशालिकनाथमिश्रविरचितम् श्रीशङ्कर-भट्टकृत मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ८)

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्या-सप्रणीतस्तत्कृतव्याख्यामलङ्कृत । ( वेदान्त ) ४॥)

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्य-विरचितभाष्यसहितम् ( यन्त्रस्थ ) ३०)

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं ४॥)

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविर-चितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । ( वेदान्त ) २१)

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १॥)

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् १२)

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता । ३)

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीश-विरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाध-र्यां प्रत्यक्षानुमानमाथुर्यां व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ख० ७ १०॥)

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धा-न्तजाह्नवीयुतम् ३)

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिक-जैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत १॥)

(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहित प्रमेयरत्नार्णव १॥)

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका २०)

(३०) वीरमित्रोदय महामहोपाध्यायश्रीमित्रमिश्रविरचित प-रिभाषा–संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च१६॥)

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ९)

(३२) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठिसंकलित ६)

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता ३॥

